णानुत्सारयेत् । ततोजान्वादिनाभिपर्यन्त मर्धचन्द्राकारं श्वेतवर्णं द्रवस्वभावं पद्मलांछितं ह्रीमिति शिरोबीजेनाप्यबीजसहितेन युक्तं कारणेश्वरेण विष्णुनाऽधिष्ठितं प्रतिष्ठाकलारूपमाप्यमण्डलं भावयामीति विचिन्त्य ह्रीं प्रतिष्ठाकलायै हुंफडिति मन्त्रेण चतुर्भिरुद्घातै रपां रसरूपस्पर्शशब्दगुणानुत्सारयेत् । ततो नाभ्यादिकण्ठपर्यन्तन्त्र्यश्रं रक्तवर्णं पचनस्वभावं स्वस्तिकलांछितं हूमिति शिखामन्त्रेणाग्निबीजसहितेन युक्तं रुद्रेण कारणेश्वरेणाधिष्ठितं विद्याकलारूपमग्निमण्डलं भावयामीति विचिन्त्य हूं विद्याकलायै हुंफडिति मन्त्रेण त्रिभिरुद्घातै रग्निगतान् रूपस्पर्शशब्दगुणानुत्सारयेत् । ततः कण्ठादि भ्रूमध्यपर्यन्तं षडश्रं कृष्णवर्णं चलनस्वभावं षड्बिन्दुलांछितं हैमितिकवचमन्त्रेण वायुबीजसहितेन युक्तं महेश्वरेण कारणेश्वरेणाधिष्ठितं शांतिकलारूपं वायुमण्डलं भावयामीति विचिन्त्य हैं शान्तिकलायै हुंफडिति मन्त्रेण द्वाभ्यामुद्घाताभ्यां वायोःस्पर्शशब्दगुणावुत्सारयेत् । ततो भ्रूमध्यादिद्वादशान्तपर्यन्तं वृत्ताकारं धूम्रवर्णं आकाशस्वभावं बिन्दुशक्तिलांछितं हः इति अस्त्रमन्त्रेण संयुक्तं सदाशिवेन कारणेश्वरेणाधिष्ठित माकाशमण्डलं भावयामीति विचिन्त्य हौं शान्त्यतीतकलायै हुंफडिति मन्त्रेण एकोद्घातेन आकाशस्य शब्दगुणमुत्सारयेत् । एतानि पृथिव्यादिमण्डलानि हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रगतानि विभाव्यशोधयेत् । इति प्रत्येकशोधनप्रकारः ॥ परस्परशोधनेत्वयं विशेषः—सर्वाणि पृथिव्यादिमण्डलानितत्तत्शोधनसमये पादादिमूर्धान्तव्यापकानि भावयेत् । पृथिवीशोधने तद्गुणपञ्चकोत्सारणानन्तरं पृथिवींस्वविरुद्धवाय्वभिभूतां वाय्वाकारापन्नां वायुशोधनसमये वायुं स्वविरुद्धपृथिव्यभिभूतं पृथिव्याकारापन्नञ्च भावयेत् । एवं जलानलावपि तत्तद्गुणोत्सारणानन्तरं स्वविरुद्धानलजलाभिभूतावनलजलाकारापन्नौ भावयेत् । आकाशगुणोत्सारणा-

नन्तर माकाशं निस्पन्दत्वव्यापकत्वशुद्धत्वादितद्विरुद्धगुणयुक्तपरशक्त्यात्मक-परमाकाशाभिभूतं तदाकारापन्नं शुद्धस्फटिकनिर्मलं भावयेदिति । इत्थं महाभूतानां प्रत्येकशोधनेन परस्परशोधनेनवा गुणक्षयात् क्षीणशक्तिकस्य भूतसमुदायात्मकस्य शरीरस्य शोषं विभाव्य पादांगुष्ठोत्थितेन शिवशक्त्यधिष्ठितेन कालाग्निना हः अस्त्राय हुंफडिति मन्त्रेण शरीरं दग्धं निरवशेषं निवृत्यादिकलामात्रशेषं शरीरगतदोषमात्रं वा दग्धं भावयित्वा द्वादशान्तस्थितशक्तिमण्डलस्रवदमृतवर्षेणाप्लावयेत् । एवं शरीरशोषार्थमुक्तशक्तिप्रकारं शरीरारम्भकभूतगुणोत्सारणं कृत्वा वा स्थूलशरीरं पृथिव्यादिपञ्चभूतबीजं मायाक्षेत्रविनिक्षिप्तं धर्माधर्ममूल मिन्द्रियशाखोपशाखं शब्दादिविषयालोचनपल्लवं भावप्रपञ्चकुसुमं सुखदुःखफलं पुरुषविहंगोपभोग्य मूर्द्धमूलमधश्शाखं वटवृक्षं विभाव्य प्राणायामं कुर्वन् षण्मात्रेण पूरकपूर्वार्धेन ह्रामित्युच्चारपञ्चकयुक्तेन पत्रपुष्पफलरहितं स्तब्धं विचिन्त्य पूरकापरार्धेन ह्रीमित्युच्चारचतुष्टययुक्तेन स्निग्धपत्रपुष्पफलोपेतं विभाव्य एकस्मिन्नेवोद्धातेन द्वादशमात्रेण कुम्भकेन ह्रूमित्युच्चारत्रययुक्तेन सव्यपादांगुष्ठोत्थितेन कालाग्निना शुष्कं दग्धं विभाव्य रेचकपूर्वार्धेन ह्रैमित्युच्चारद्वययुक्तेन भस्मीभूय दिक्षु विप्रकीर्णं विभाव्य रेचकापरार्धेन ह्रौमित्येकोच्चारयुक्तेन स्फटिकनिर्मलं शुद्धव्योमरूपं चिन्तयित्वाऽमृतेनाप्लावयेत् । एवं देहदाहं कृत्वा यथोक्तसंख्यैरुद्धातै स्तत्तद्गुणोत्सारणपर्यंतामेववा गुणोत्सारणादिभावनांविना पृथिव्यादिकं बन्धकत्वान्निवृत्तं भवतीत्यनुसंधानपूर्वकं तत्तत्स्थानेषु वायुमनोधारणापर्यन्तमेववा भूतशुद्धिं कुर्यात् । उद्धातशब्देन उद्धन्यते उत्सार्यते अनेनेति व्युत्पत्त्या भूतगुणानां तदशुद्धेर्वा उत्सारणसाधनमुच्यते । तत्तत्कलामन्त्रोच्चारणपूर्वकं पूरकं कृत्वा सुषुम्नया यावद्द्वादशान्तं प्राणवायोरूर्द्ध्वप्रवर्तनरूपं कर्म । तच्च पूरकं कृत्वा कुंभककाले प्राणवायोरूर्द्ध्वं प्रेरणं कृत्वा तत्प्रतिनिवर्त्य दक्षिणनाड्या तद्रेचकापय-

न्तम् । एवंच एकैकस्मिन्नुद्घाते पूरकाद्यास्त्रयस्त्रयः प्राणायामा इति पृथिव्यां पञ्चाना मुद्घातानां पञ्चदशप्राणायामास्संपद्यन्ते । जलादिषु द्वादश नव षट् त्रयश्च भवन्ति । एकैकस्मिंश्च रेचकादिरूपे प्राणायामे द्वादशमात्राकालः । ततश्चैकैक उद्घातः षट् त्रिंशन्मात्राकालो भवति । यद्वा—धारणार्थे कुम्भकप्राणायाम एव द्वादशमात्राकालनियमः । पूरकरेचकयोर्यथासंभवं कालो ग्राह्यः । जानुमण्डल मङ्गुल मविलंबित मेकवारं प्रदक्षिणीकृत्य अंगुळिस्फोटनकालो मात्राकालः । त्रिःप्रदक्षिणीकृत्य अंगुळिस्फोटनकाल इति तु सिद्धान्तशेखरादिषूक्तम्। अयञ्च कनिष्ठो मात्राकालः । द्विगुणो मद्ध्यमः । त्रिगुण उत्तमः । इत्थं कालविशेषावच्छिन्नप्राणवायुप्रवर्तनात्मक मुद्घातमनपेक्ष्य तत्तद्गुणसमसङ्ख्यकलामन्त्रोच्चारणेन तत्तद्गुणोत्सारणानुसन्धानरूपां वा एकवारं तत्तत्कलामन्त्रोच्चारणेन तत्तत्कलातत्वभुवनवर्णपदमन्त्रयुक्तानां पार्थिवमण्डलादीनां स्वात्मानंप्रति प्रतिबन्धकत्वनिवृत्त्यनुसन्धानात्मकपाशच्छेदमात्ररूपां वा भूतशुद्धिं कुर्यात् ॥

पार्थिवादिमण्डलानिच निवृत्तिप्रतिष्ठाविद्याशान्ति शान्त्यतीतकलामयानि शरीरे पादादि जान्वादि नाभ्यादि कण्ठादि भ्रूमध्यादिच स्थितानि। हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्राश्रितानिवा शतकोटियोजन परिमाणमारभ्य उत्तरोत्तरदशगुणपरिमाणानि चतुरश्रार्धचन्द्र त्रिकोण षडश्र वृत्तरूपाणि वज्रपद्मद्वय स्वस्तिक षड्बिंद्वेकबिन्दुलांछितानि पीतरक्तश्वेतकृष्णधूम्रवर्णानि कठिनद्रवोष्णचलनावकाशस्वभावानि गन्धादिपञ्चचतुस्त्रिद्व्येकगुणानि ब्रह्मविष्णुरुद्रमहेश्वरसदाशिवाधिष्ठितानि बिन्दुयुक्तलकारवकाररेफयकारहकाररूपैः पार्थिवादिबीजैर्युक्तानि भावनीयानि । तत्र निवृत्तिकलायां पृथिवीतत्वमेकं अष्टोत्तरशतं भुवनानि ककार एकोवर्णः अष्टाविंशतिपदानि सद्योजातहृदयाख्यौ द्वौ मन्त्रौ । प्रतिष्ठाकलायां जलादिप्रकृत्य-

न्तानि त्रयोविंशतितत्वानि षट्पञ्चाशद्भुवनानि खादिमान्ताश्चतुर्विंशतिवर्णाः द्वात्रिंशत्पदानि वामदेवशिरस्समाख्यौ द्वौ मन्त्रौ । विद्याकलायां पुरुषादिमायांतानि सप्ततत्वानि सप्तविंशतिभुवनानि यादिसान्तास्सप्तवर्णाः एकविंशतिपदानि अघोरशिखाख्यौ द्वौ मन्त्रौ । शान्तिकलायां शुद्धविद्या महेश्वरश्चेति द्वे तत्वे अष्टादशभुवनानि हक्षौ वर्णौ द्वादशपदानि पुरुषकवचाख्यौ द्वौ मन्त्रौ । शान्त्यतीतकलायां सदाशिवशक्ती द्वे तत्वे पञ्चदश भुवनानि स्वराष्षोडश वर्णाः एकं पदं मूलेशानास्त्राख्यास्त्रयो मन्त्राः । एवमेकादशमन्त्रात्मको मन्त्राध्वा । व्योमव्यापी मन्त्रगतचतुर्नवतिपदात्मकः पदाध्वा । पञ्चाशद्वर्णात्मकः वर्णाध्वा । निवृत्यादिपञ्चकलात्मकः कलाध्वा । एवं सकलाध्वगर्भाणि पृथिव्यादिमण्डलानि विभावनीयानि । यद्वा—संक्षेपेण सर्वाध्वगर्भत्वं विभावनीयम् । तद्यथा—सद्यादिपञ्चमन्त्रात्मको मन्त्राध्वा । जाग्रत्स्वप्नसुषुप्तितुर्यतुर्यातीतरूप पञ्चावस्थात्मकः पदाध्वा । पादादि हृदयादिवा पार्थिवमण्डलादिस्थानपञ्चकरूपो भुवनाध्वा । अकारादिवर्णत्रयबिन्दुनादात्मको मूलमन्त्रपञ्चवर्णात्मको वा वर्णाध्वा । पञ्चकलात्मकः कलाध्वेति । एवं वा सर्वाध्वगर्भाणि विभाव्य प्रागुक्तप्रकारेण संस्थानवर्णस्वभावलांछनबीजमात्रयुक्तानि वा विभाव्य शोधनीयानि । एवं पृथिव्यादिप्रविलापनरूपा तत्तद्गुणक्षेपणेन देहदाहरूपा देहगतबाह्याभ्यन्तरदोषमात्रदहनरूपा गुणक्षपणं विना केवलदेहदाहरूपा दाहं विना केवलतत्तद्गुणक्षपणरूपा बन्धकत्वनिवृत्यनुसन्धानात्मकपाशच्छेदमात्ररूपा च भूतशुद्धिः । सर्वाऽप्येषा सोद्घाता निरुद्घाता चेति द्विविधा । तत्तद्गुणक्षपणं च प्रत्येकशोधनरूपं परस्परशोधनादिमन्त्रेण चेति द्विविधम् ॥

सर्वाध्वगर्भत्वेनसंस्थानं च द्विविधं । भूतचिन्तनमपि सर्वाध्वगर्भत्वेन सं-

स्थानादिमात्रेणचेतिद्विविधं।सर्वाध्वगर्भत्वचिंतनञ्च प्रपञ्चेनसंक्षेपेणचेति द्वि-विधं । एवमुक्तप्रकारासुभूतशुद्धिषुपूर्वाचारदेशकालाद्यनुसारेणयाकाचिद्भूत-शुद्धिरनुष्ठेया । एवं भूतशुद्ध्यात्मिकादेहशुद्धिरुक्ता । तत्वशुद्ध्यात्मिकां देह-शुद्धिंकुर्यात् ॥

यथा—प्रकृत्यहङ्कार बुद्धिमनश्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायू पस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमितत्वभूत मरूप मशुद्ध मात्मतत्वं स्थूलदेहं मायाकलाविद्यारागकालानियतिपुरुषतत्वरूपं शुद्धाशुद्धं विद्यातत्वं सूक्ष्मदेहं शिवशक्तीश्वरसदाशिवशुद्धविद्यातत्वरूपं शुद्धं शिवतत्वं परदेहञ्च विभाव्य स्थूलदेहं सूक्ष्मदेहे तत्परदेहेच प्रविलापयेत् । उक्तप्र-काराणामन्यतमशोधनानुष्ठानानन्तरं हौं शान्त्यतीतकलायैनम इत्यादिभि-र्मन्त्रैस्सूक्ष्मपञ्चकलामयस्य शुद्धसूक्ष्मशरीरस्य सृष्टिं पञ्चभिः कलामन्त्रैरेव स्थूलपञ्चकलामयस्य स्थूलदेहस्य सृष्टिंच तत्तध्वंसनपक्षे विभाव्य हां श-क्तये वौषडिति शक्तिमण्डलस्रुतामृतधारयाऽऽप्लावयेत् । ततोहृत्कमल-कर्णिकायां हामाधारशक्तयेनमः । हां धर्मासनायनमः । हां ज्ञानायनमः । हां वैराग्यायनमः । हामैश्वर्याय नमः । हां पद्मायनम इति मध्याग्नेयादिको-ण चतुष्टयमध्येषु षडुत्थासनं विन्यस्य तत्र पुनस्स्थूलसूक्ष्मदेहात्मिकामवि-भक्तकरचरणादिरूपां मूर्तिं हां हं हां आत्ममूर्तये नम इति विन्यस्य हौं विद्यादेहायनमइति अष्टत्रिंशत्कलारूपं सदाशिवरूपं ध्यात्वा शिवायनमइति द्वादशान्तस्थ परमशिवसायुज्यं निर्मलज्ञानक्रियाशक्तिकं यजमानमूर्तिरूपं जीवात्मानं तत्रावाह्य हृदयादिस्थानेषु हृदयादिमन्त्रान्विन्यस्य मूलेन परमी-कृत्य वौषडन्तशक्तिमन्त्रेण द्वादशान्तस्थितशक्तिमण्डलस्रुतबहुलामृतधारया ऽभिषिञ्चेत् । ततो दण्डमुण्डकलाश्रीकण्ठादिन्यासान्कुर्यात् ॥

तत्रायं क्रमः— शिवासनमव्यक्तां शिवमूर्तिञ्च हृदये विन्यसेत् ।

होमीशानमूर्ध्नेनम इति समुष्टिकांगुष्ठाग्रेण मूर्ध्नि । हें तत्पुरुषवक्त्राय नम-इत्यंगुष्ठतर्जनीभ्यां मुखे । हुमघोरहृदयायनम इति अंगुष्ठमध्यमाभ्यां हृदये । हिं वामदेवगुह्याय नम इत्यंगुष्ठानामिकाभ्यां गुह्ये । हं सद्योजातमूर्तये नमइत्यंगुष्ठकनिष्ठिकाभ्यां पादे । होमीशानायोर्द्ध्ववक्त्रायनमः । हें तत्पुरुषा-य पूर्ववक्त्रायनमः । हुं अघोराय दक्षिणवक्त्रायनमः । हिं वामदेवाय उत्त-रवक्त्रायनमः । हं सद्योजाताय पश्चिमवक्त्रायनम इत्यूर्द्ध्व पूर्वदक्षिणोत्त-रपश्चिमस्थानेषु पूर्वोक्तप्रकारेण तत्तदंगुळिभिर्विन्यसेत् । एवं दण्डवक्त्रभं-गिन्यासानन्तरं सशक्तिकाः कलाशक्तिरहितावा वक्ष्यमाणस्थानेषुदीक्षित-ब्राह्मणः न्यासं कुर्यात् । क्षत्रियवैश्यौ युगान्तरे न्यासं कुर्याताम् । तदितरेश क्तीरेवन्यसेयुः । यथा- हें शशिन्यैनमः। हों अङ्गदायैनमः । होमिष्टदायैनमः। हों मरीच्यै नमः । हों ज्वालिन्यैनमः । इत्यूर्द्ध्वपूर्वदक्षिणोत्तरपश्चिममूर्धसु समुष्टिकांगुष्ठमुद्रया न्यसेत् । हें शान्त्यैनमः । हें विद्यायैनमः । हें प्रतिष्ठायै नमः । हें निवृत्यैनमः । इति पूर्वदक्षिणोत्तरपश्चिमवक्त्रेषु अंगुष्ठतर्जनीभ्यां न्यसेत्। हुं तमायैनमः । हुं मोहायैनमः । हुं क्षुधायैनमः । हुं निद्रायैनमः । हुं मृत्यवे नमः । हुं मायायै नमः । हुं भयायै नमः । हुं तारायैनमः । इत्यंगुष्ठमध्यमाभ्यां हृदयकण्ठांसद्वयनाभिजठरपृष्ठवक्षस्सु न्यसेत् । हिं रजायैनमः । हिं रक्षायैनमः । हिं रत्यैनमः । हिं पाल्यैनमः । हिं कामायैनमः । हिं संयमायैनमः । हिं क्रियायैनमः । हिं बुद्ध्यैनमः । हिं कार्यैनमः । हिं धात्र्यै नमः । हिं ब्राह्मण्यैनमः । हिं मोहिन्यै नमः । हिं मनोन्मन्यै नमः । इत्यंगुष्ठानामिकाभ्यां मूलाधारगुह्यवृषणोरुद्वयजंघाद्वयास्फिग्द्वयकटिदक्षिण-पार्श्वेषु विन्यसेत् । हांसिद्ध्यै नमः । हं ऋद्ध्यैनमः । हं दूत्यै नमः । हं ल-क्ष्म्यैनमः । हं मेधायैनमः । हं कान्त्यैनमः । हं स्वधायै नमः । हंधृत्यैनमः। इत्यंगुष्ठकनिष्ठिकाभ्यां पादद्वयकरद्वयघ्राणशिरोबाहुद्वयेषु न्यसेत् । नम-

स्वाहादिजातिषट्कयुक्तमङ्गन्यासं च कुर्यात् । यस्यावसरोऽस्ति मतिक्षोभश्च नभवति स श्रीकण्ठादिन्यासषडध्वन्यासादिकमपि कुर्यात् । एवं जविशुद्धि देहशुद्धिपूर्वकन्यस्तमन्त्रतनुस्वरूपेण विग्रहेण च शिवरूपतां प्राप्तश्शिवार्चनयोग्यो भवति । नाशिवश्शिवमर्चयेदित्यामनन्ति । एवं जीवदेहशुद्धिकरणाशक्तौ न्यासमात्रं कुर्यात् । न्यासस्यापि कृत्स्नस्य करणाशक्तौ दण्डन्यासमात्रं षडङ्गन्यासमात्रंवा कुर्यात् । तावतैव देहात्मनोश्शुद्ध्या शिवरूपतापत्त्याच शिवार्चनयोग्योभवति ॥ एवं कृताङ्गन्यासोऽन्तर्यागं कुर्यात् ॥

## अन्तर्यागक्रमः ॥



तस्यायं क्रमः— अन्तर्हृदयावकाशे दिव्यरत्नमयं शिवार्चनमण्डपं मनसा सङ्कल्प्य तत्र शिवार्चनोपयुक्तानि सर्वाणि द्रव्याणि मनसोपनीय विशोध्य द्वादशान्तस्थितचन्द्रमण्डलगळदमृतधारयाऽर्घ्यपात्रादिपूरणं तत्संस्कारश्चकृत्वाद्वारपालार्चनंविधायवक्ष्यमाणप्रकारेणगणेशगुरुवन्दनानुज्ञाप्रार्थनापूर्वकं माणिक्यवर्णनाभिकन्दसमुत्थितनीलवर्णनाळश्चातिधवळवर्णाष्टदळहृदयकमलकर्णिकाकारसंस्थितकुण्डलिनीशक्तिरूपबिंद्वात्मके पीठे श्रवणांगुष्ठसंयोगाधिगम्यनादरूपं दीपशिखाकारलिङ्गं विचिन्त्य पीठे वक्ष्यमाणप्रकारेण शक्त्यादिशक्त्यन्तं शिवासनमभ्यर्च्य लिङ्गेशिवमूर्तिं विद्यादेहं चाभ्यर्च्य तत्र परमशिवमावाहनादिक्रमेण ध्यात्वाऽन्तस्संस्कारैरभ्यर्च्य द्वादशान्तस्थितबहुळामृतधारयाभिषिच्य वस्त्राभरणादिभिः वैराग्यचन्दनेनचालंकृत्याहिंसापुष्पं समर्प्य यामित्यादिप्रकारेण अहिंसेंद्रियनिग्रहक्षमादानज्ञानतपस्सत्यभावरूपै रष्टभिः पुष्पैः अभ्यर्चयेत् । ततो मनसि पात्रे प्राणमग्निं महङ्कारभ्रमिशिखांच सङ्कल्प्य धूपं दद्यात् । शिवज्ञानमेव दीपं सङ्कल्प्य दद्यात्।

विषयेभ्यः प्रत्याहृतं मनो नैवेद्यमिति भावयित्वा समर्पयेत् । सुषुम्नामार्गेण प्राणस्य गमागममेव जपत्वेन भावयेत् । पार्थिवादिपञ्चधारणास्थिरीकृत-सदाशिवावयवजातध्यानकल्पितै स्तत्तदवयवोचितैः भूषणैश्चभूषयेत् । शिवोऽहमिति शिवसाम्यभावनारूप मात्मनिवेदनं च कुर्यात् । यद्वा— अभिषेकानन्तरं गन्धशब्दस्पर्शरूपरसतन्मात्राचन्दनपुष्पधूपदीपनैवेद्यान्यात्मना समर्पयेत् । तत्रायं क्रमः—मूलमन्त्रोच्चारणपूर्वकं हां सद्योजाताय शिवाय गन्धतन्मात्रात्मकं चन्दनं समर्पयामि । होमीशानायशिवाय शब्दतन्मात्रात्मकं पुष्पं समर्पयामि । हैं तत्पुरुषाय शिवाय स्पर्शतन्मात्रात्मकं धूपं समर्पयामि । हूमघोराय शिवाय रूपतन्मात्रात्मकं दीपं समर्पयामि । हिं वामदेवाय शिवाय रसतन्मात्रात्मकं नैवेद्यं समर्पयामीति भावयेत् । ततो हस्तप्रक्षाळनमुखवासदानानन्तरं सत्वरजस्तमोगुणात्मकं तांबूलं समर्पयामीति भावयेत् । ततोनीराजनं परिकल्प्य । बुद्धिस्थवायुना क्लृप्तं दर्पणं मङ्गळानिच । मनोवृत्तिर्विचित्रा ते नृत्तरूपेण कल्पिता ॥ ध्वनयो गीतरूपेण शब्दवाद्यप्रभेदतः । सुषुम्ना ध्वजरूपेण प्राणाद्याश्चामरात्मना ॥ अहङ्कारो गजत्वेन क्लृप्तो देहो रथात्मना । मनः प्रग्रहरूपेण बुद्धिस्सारथिरूपतः ॥ सर्वमन्यन्मया क्लृप्तं तत्रोपकरणात्मनेति ॥ सर्वमात्मीयं बुद्धिमनःप्राणादिकं शिवपूजोपकरणत्वेन समर्पयेत् । आवरणपूजामपि वक्ष्यमाणरूपां तत्समये कुर्यात् । ततः प्रदक्षिणनमस्कारैश्शिवं प्रसादाभिमुखं विधाय तदाज्ञयाऽग्निकार्यं कुर्यात् ॥

अग्निकार्यक्रमः ॥



तत्रायं क्रमः—नाभौ त्रिमेखलं कुण्डं तत्राग्निं च स्वतस्सिद्धं विभाव्य तमग्निमस्त्रमन्त्रेण प्रज्वाल्य तत्राग्नौ किञ्चिदंगारं क्रव्यादांशत्वेन भाव-

यित्वा तन्निर्ऋतिकोणे परित्यज्य कुण्डस्थमग्निं निरीक्षणादिभिस्संशोध्य तस्य शिवाग्नित्वसिद्ध्यर्थं रेचकेण वायुना तं चैतन्यात्मना हृदयं नीत्वा तत्रत्येन ज्ञानाग्निना संयोज्य ततस्सुषुम्नया द्वादशान्तं नीत्वा तत्र परमशिवेन संयोज्य तत्तेजःपुञ्जपिञ्जरं सूर्यायुतसमप्रभं भावयित्वा तं ज्ञानाग्निरूपं प्रत्यानीय नाभिकुण्डे स्थापयेत् । एवं कृते संस्कारान्तरमनपेक्ष्य शिवाग्निर्भवति । तत्र शिवाग्निं रक्तवर्णं चतुर्वक्त्रं दशभुजं सदाशिवसमानायुधं ध्यात्वा तस्य हृदयकमले आसनमूर्तिविद्यादेहविन्यासपुरस्सरं शिवमावाह्य सुषुम्नास्रुवेण द्वादशान्तस्थितामृतधाराज्यं मूलेनाष्टोत्तरशत मष्टाविंशतिवार मष्टवारं वा हुत्वा शाक्तामृतघृतपरिपूर्णनाभिकन्दकलां हृदयकमलांकितसुषुम्नामन्तस्स्रुचं विभाव्य तया हां शक्तये वौषडिति पूर्णाहुतिं हुत्वा होमसंतर्पितं शिवं नाडीमार्गेण हृत्पद्मपूजिते शिवे संयोज्याष्टपुष्पिकयाऽभ्यर्च्य पूजां समापयेत् । तदनन्तरं भ्रूमध्ये सर्वावयवसंपूर्णं शुद्धदीपसमाकृतिंच शिवं सकळनिष्कळरूपेण ध्यात्वा शिवं संपूज्य पूज्यपूजकभावेन द्विधास्थितः शिवोऽहमेवेति मनस्समाधीयतामीति आत्मशुद्धिः॥

## स्थानशुद्धिप्रकारः ॥

अथ स्थानशुद्धिः । तत्प्रकारः—हृद्यूर्ध्वमुखौ करौ कृत्वा हः अस्त्राय हुंफडिति ताळत्रयं कृत्वा छोटिकया दशसु दिक्षु विघ्नानुत्सार्यास्त्रमन्त्रेण ज्वलदग्निवर्णं प्राकारं कृत्वा ततोबहिः हैं कवचायनम इति दक्षिणतर्जनीभ्रमणेन परिखात्रयं च कृत्वा हां शक्तये वौषडिति शाक्तं ज्योतिरूर्ध्वमधश्च विभाव्य महामुद्रां प्रदर्शयेत् ॥ इति विघ्ननिवारणार्थं स्थानशुद्धिः ॥

## ॥ द्रव्यशुद्धिप्रकारः ॥

अथ द्रव्यशुद्धिः । सर्वाणि वक्ष्यमाणयागोपयोग्यानि द्रव्याणि देव-

स्य वामभागे निवेश्य वस्त्रपूतशुद्धजलपरिपूर्णजलपात्रं च दक्षिणभागेनिवेश्य आत्मार्चनावरणपूजार्थं गन्धपुष्पादिकं शिवार्थद्रव्येभ्यः पृथग्निवेश्य अर्घ्यपाद्याचमनीयजलानि पूरयेत् । चत्वार्यर्घ्याणि ॥ सामान्यार्घ्यं विशेषार्घ्यं निरोधार्घ्यं पराङ्मुखार्घ्यमिति । द्वारपालावरणदेवतादीनां सामान्यार्घ्यं शिवस्यार्घ्यकालेषु विशेषार्घ्यं शिवस्यैव निरोधनसंस्कारसमये निरोधार्घ्यं विसर्जनसमये पराङ्मुखार्घ्यम् । चतुर्णा मेतेषामर्घ्याणां चत्वारि पात्राणि दशपलप्रमाणेनवा पञ्चपलप्रमाणेनवा सार्धद्विपलप्रमाणेनवा यथासम्भवप्रमाणेनवा सुवर्णरजतताम्रान्यतमद्रव्येणवा पञ्चपर्वोन्नतानि पञ्चपर्वविवृतानि वृत्ताकाराणि चतुरश्राकाराणिवा बहिरष्टदळपद्मांकितानि एकांगुळिप्रमाणानि अंगुळचतुर्थांशघनानि उक्तप्रकारादर्धप्रमाणानिवा तदर्धप्रमाणानिवा अर्घ्यपात्राणि ग्राह्याणि । (१) पाद्याचमनपञ्चगव्यपञ्चामृतगन्धधूपदीपपात्रघण्टादीन्यपि पूर्वोक्तदशपलादिप्रमाणेनैव कर्तव्यानि । तत्र पाद्यपात्रं षडंगुळविस्तारं चतुरंगुळोत्सेधं चतुरंगुळविस्तारोत्सेधपादं चतुरंगुळनासिकं एकांगुळोष्ठं तदर्धमानं तदर्धमानंवा कर्तव्यम् । (आचमनपात्रं) पाद्यक्षेपपात्र मष्टांगुळोत्सेधं षोडशांगुळविस्तारं चतुरंगुळोत्सेधमष्टाङ्गुळविस्तारपादयुक्तं एकाङ्गुळोष्ठमुक्तप्रकारार्धप्रमाणं तदर्धप्रमाणंवा वृत्तकङ्कणयुक्तपार्श्वद्वयं कर्तव्यम् । आचमनपात्रं द्वादशांगुळोत्सेधं विस्तारकुक्षिकं षडंगुळविस्तारेण षडंगुळोत्सेधेनवा पादेन युक्तं द्व्यंगुळत्र्यंगुळोत्सेधकण्ठं एकांगुळोष्ठं त्र्यंगुळविस्तारमुख मैच्छिकप्रमाणमुकुळाकारवितानसंयुक्तं चतुरंगुळप्रमाणत्रिवक्त्रयवप्रमाणरन्ध्रमूलप्रभृतिक्रमापचितपरिमाणनासिकायुक्तं तदर्धपरिमाणं वा कर्तव्यम् । यद्वा पाद्याचमनीय-

१. सुवर्णाद्यभावे शुक्तिखड्गशृङ्गशिलादारुनाळिकेरकरंकादिनिर्मितानिवानवमृत्पात्ररूपाणि वा पलाशाब्जकदळीदळादिकृतपर्णपुटरूपाणि वा ऽर्घ्यपात्राणि ग्राह्याणीति पुस्तकान्तरेऽधिकं वर्तते ॥

पात्रेऽप्यर्घ्यपात्रवदेव वृत्ताकारे कर्तव्ये। आचमनक्षेपपात्रमपि पाद्यक्षेपपात्रवत्कर्तव्यम्। अर्घ्यपाद्याचमनाधारयंत्रिकास्तु त्रिपदीरूपाः त्रिवक्रपादसंयुक्ताः अष्टांगुलोत्सधोः पादमूर्द्धभागे वलयस्याधस्तात्सिंहवक्त्रांकिताः कर्तव्याः। सुवर्णाद्यसंभवे पाद्यादिपात्राण्यपि अर्घ्यपात्रवत् शिलादारुमयपत्रपुटादिरूपाणि ग्राह्याणि। तत्र सामान्यार्घ्यद्रव्याणि तिलतण्डुलाः। विशेषार्घ्यस्य एलालवङ्गकर्पूरातिबृत्तातिफलमुद्गव्रीहितिलावा जलक्षीरकुशाग्रतण्डुलसुमनस्तिलयवसिद्धार्था वा दर्भदूर्वादिव्रीहितिलक्षीरनीरसिद्धार्थावायवसिद्धार्थव्यतिरिक्तादर्भादयष्ट वा दर्भसिद्धार्थजलतिलाश्चत्वारो वा दूर्वाकुङ्कुमकर्पूरास्त्रयो वा द्रव्याणि। निरोधार्घ्यस्य दर्भदूर्वायवतण्डुलसिद्धार्थाः पञ्चद्रव्याणि। तिलसहितान्यष्टपराङ्मुखार्घ्यस्य द्रव्याणि। पाद्यस्य दूर्वाचन्दनसिद्धार्थोशीरह्रीबेरकुङ्कुमानि षड्वा। तान्येव कुंकुमं विना पञ्चवा। दूर्वासिद्धार्थचन्दनोशीराणि चत्वारि वा ह्रीबेरचन्दनोशीराणि त्रीणि वा द्रव्याणि। आचमनीयस्य एलालवङ्गकर्पूरजातीकोष्ठतिंबुत्रिफलचन्दनोशीराणि एकादशवा एलालवङ्गकर्पूरातिंबुमुरजातिफलानि षड्वा एलालवङ्गकर्पूरह्रीबेरजातिफलानि पञ्चवा एलालवङ्गकर्पूराणि त्रीणि वा द्रव्याणि। एलादीनि चार्घ्यादिद्रव्याणि प्रत्येकं उत्तममध्यमादिभावेन अशीतिचत्वारिंशद्विंशतिदशपञ्चव्रीहिपरिमितानि देयानि ॥

## ॥ पाद्यादिपूजा ॥

अथ पाद्यादिपूजाविधानमुच्यते। पाद्याचमनीयसामान्यार्घ्यविशेषार्घ्यनिरोधार्घ्यपराङ्मुखार्घ्यपात्रत्रिपदीर्देवस्य पुरतो वामादिक्रमेण विन्यस्य तासां पादेषु ब्रह्मविष्णुरुद्रान् वलयेष्विडाधारशक्तिं चाभ्यर्च्य पाद्यादिपात्राण्यस्त्रमन्त्रेण संक्षाल्य त्रिपदीषु विन्यस्य अस्त्रमन्त्रेण वौषडन्तहृदयमन्त्रेण वा द्रुतोयेनापूर्य। कवचमन्त्रेण पाद्यादिद्रव्याणि तत्तत्पात्रेषु निक्षिपेत्। द्रव्या-

लाभे शुद्धोदकपूरणमात्रंकुर्यात् । ततः पाद्यादिपात्राणि बिंदून्तं समुद्गृत्य बिन्दुप्रसृतामृतधारामयेन गङ्गादिसकलतीर्थोदकेनापूर्णानि भावयित्वा यन्त्रकाणामुपरिस्थापयेत्। अथवा बिन्दुस्थानादङ्कुशमुद्रयादिव्यामृतमयं गङ्गादितीर्थमाकृष्य संहारमुद्रया तमादाय वौषडन्तहृदयेनोद्भवमुद्रया यन्त्रकांतस्थेष्वेव पाद्यादिपात्रेषु विनिक्षिपेत् । ततो विशेषार्घ्यजले शिवासनमूर्तिपञ्चब्रह्मविद्यादेहनेत्र मूलाङ्गानि विन्यस्य मूलेन गन्धपुष्पाक्षतै स्संपूज्य ब्रह्माङ्गमूलैरभिमन्त्रयेत् ॥

केवलं वा ब्रह्माङ्गमूलैरभिमन्त्रयेत् । निरोधार्घ्यं ब्रह्मभिः पराङ्मुखार्घ्यमङ्गैस्सामान्यर्घ्यमस्त्रमन्त्रेणाभिमन्त्रयेत् । पाद्याचमनीये ब्रह्मभि रङ्गैरस्त्रेण वा अभिमन्त्रयेत् । ततोऽस्त्रेण दिग्बन्धनं कृत्वा कवचेनावकुण्ठनं कृत्वा वौषडन्तशक्तिमन्त्रेण धेनुमुद्रां प्रदर्श्यामृतीकुर्यात् । पाद्यादिपराङ्मुखार्घ्यपर्यन्तेषु त्रिपदीविन्यासाद्यमृतीकरणान्तं प्रत्येकं काण्डानुसमये न वा कुर्यात् । अथ पराङ्मुखार्घ्यसमीपे शङ्खपूजाकर्तव्या । प्रस्थमानिकाः कुडवजलपूर्णीयाश्शङ्खा उत्तममध्यमकनीयांसः तथा मूलाग्रमूलस्थूलाग्रस्थूलाः पुंस्त्रीनपुंसकरूपाःशङ्खार्घ्यमूलेवसुंधरा वलये सूर्यः कुक्षौ विष्णुः पार्श्वे चन्द्रमाः धारायामघोरः मुखेसततीर्थानिच सन्ति । तथापि शङ्खे बहिर्मूलाग्रयोरास्थित्वदशुचिरितितयोर्हेमरत्नादिभूषितः कर्तव्यः । एवंभूतं शङ्खंदग्धन्तुपशोधितास्त्रमन्त्रक्षाळितं पूर्ववदर्चितायान्त्रिपाद्यांविन्यस्य विशेषार्घ्यवत्पूजयित्वा आत्मानं शिरसि तत्तोयैस्त्रिवार मभिषिञ्चेत् । एवं बहुपात्रसंपादनतत्पूजनाशक्तौ निरोधार्घ्यपराङ्मुखार्घ्ये निरोधार्घ्यजलेनैव कर्तव्ये । विशेषार्घ्यजलेनैववा अर्घ्यपात्रत्रयमपि कर्तव्यम् । एवं पाद्याचमनीयद्वयमपि विशेषार्घ्येणैव कर्तव्यम् । विशेषार्घ्यस्यापि पात्रान्तराभावे शङ्खजलेनैव पाद्याचमनद्वय मर्घ्यत्रयंच कर्तव्यम् । आवरणदेवताद्यर्थं

सामान्यार्घ्यमात्रं पात्रान्तरे संस्कार्यम् । एवं पात्रसङ्कोचपक्षे यदीयजलेन उपचारान्तरं क्रियते तदीयमेव पात्रमादाय तत्संस्काराः कर्तव्याः । अन्यदीयसंस्कारा अपि वा परिधौ यूपधर्मवदविरुद्धाः कर्तव्याः । अथवा नित्यं विषुवायनोपरागादिषु कर्तव्यम् ॥

## ॥ पञ्चगव्यविधिः ॥

अथ पञ्चगव्यविधानमुच्यते— देवस्य पूर्वभागे ईशानादिभागे वा द्विहस्तमात्रं हस्तमात्रं वा चतुरश्रं गोमयेनोपलिप्य चतुर्भिः प्राचीनैश्चतुर्भिरुदीचीनैश्च सूत्रैः प्रत्येकं तालप्रमाणानि नवकोष्ठान्युद्धृत्य प्रतिकोष्ठं आढकं तदर्द्धमानान् व्रीहीन् तदर्द्धमानान् तण्डुलान्कुशान्वा प्रसार्य उत्तराभिमुखः प्रतीचीं दिशं पञ्चसंख्यै रुदगग्रैः प्रागग्रैश्च दर्भैः परिस्तीर्य परितः पुष्पैरलङ्कृत्य शिवतत्वायनमः । सदाशिवतत्वाय नमः । विद्यातत्वायनमः । पुरुषतत्वायनमः । कालतत्वायनमः । पृथिवीतत्वायनमः । जलतत्वाय नमः । वायुतत्वायनमः । प्रकृतितत्वाय नमः । इति मद्ध्यपूर्वदक्षिणोत्तरपश्चिमाग्नेयनैऋतमारुतैशानकोष्ठानि संपूज्य सौवर्णानि कांस्यानि अभिन्नाकृष्णनवमृन्मयानिवा पात्राणि संक्षाळ्य नवसु कोष्ठेषु संस्थाप्य सुप्रतिष्ठपात्रायनमः । सुशान्तपात्रायनमः । तेजोमयपात्रायनमः । रत्नोदकपात्रायनमः । अमृतपात्रायनमः । अव्यक्तपात्रायनमः । सूर्यपात्राय नमः । संयुक्तपात्राय नमः । अव्यक्तपात्राय नमः इति प्रागुक्तकोष्ठक्रमेण पात्राणिसंपूज्य । ताम्रवर्णायाः क्षीरं त्रिकुडवं मध्यपात्रे शुक्लवर्णायाः दधि द्विकुडवं पूर्वपात्रे कापिलवर्णायाः घृतं कुडवं दक्षिणपात्रे श्यामवर्णायाः गोमूत्रं प्रस्थं उत्तरपात्रे, कृष्णवर्णायाः गोमयं कुडवं प्रमाणं पञ्चकुडवजलसंयुक्तं वस्त्रपूतं पश्चिमपात्रे कपित्थफलप्रमाणानितदर्द्धप्रमाणानि तदर्धप्रमाणानिवा तण्डुलामलकहरिद्रापिष्टा न्याग्नेयनैर्ऋतवायव्यकोणपात्रेषु

कुशोदकं षट्त्रिंशत्पञ्चविंशतिद्वादशश्च तदर्धकृतेन प्रदक्षिणं दर्भं वायव्य परिवर्तितेन हस्तमानेन तालमानेन वा द्व्यङ्गुलग्रन्थिना चतुरङ्गुलाग्रेण कूर्चेन संयुक्त माढिकमानकं गन्धदूर्वायुक्त मैशानकोणपात्रेच हृदयेन प्राक्षिप्य क्षीरादिगोमयान्तानि पञ्चगव्यानि क्रमात्पञ्चचतुस्त्रि द्व्येकसंख्यैरीशानादिमन्त्रैरशालिपिष्टं हृदयेनामलकं शिरसा हरिद्रां कवचेन कुशोदकं षड्वारावृत्तब्रह्मपञ्चकेनाभिमन्त्रयेत् । तदनन्तरं गोमयं गोमूत्रे तदुभयं घृते तत्रयं दध्नि तच्चतुष्टयं क्षीरेच हृदयमन्त्रेण निक्षिप्य तत्रैव कुशोदकं मूलमन्त्रेण क्षिपेत् ॥ पञ्चब्रह्मषडङ्गैरभिमन्त्र्य अस्त्रेण संरक्ष्य कवचेनावकुण्ठ्य धेनुमुद्रां प्रदर्श्य गन्धपुष्पै रभिपूज्यास्त्रमन्त्रेण धूपदीपौ प्रदर्श्य मूलेनाभिमन्त्रयेत् ॥

## पञ्चामृतविधिः ॥



अथ पञ्चामृतविधानमुच्यते—तत्पूजा पञ्चगव्यपूजायाः प्राग्भागे कर्तव्या । तत्र पात्रपूजापर्यन्तं पूर्वमध्यादिपश्चिमान्तेषु क्षीरदधिघृतमधुशर्कराः प्रत्येकं प्रस्थमानाः पादोनप्रस्थमानावा प्रस्थार्द्धमानावाऽऽग्नेयादिकोणेषु यथासंभवं कदळीपनसाम्रफलानीशानकोणे कुशोदकवद्गन्धोदकं तत्तत्स्थानस्थिताना मभिमन्त्रणं पूर्ववत् । शर्करा गोमयवज्जलयुक्ता । संयोजनन्तु नास्ति । अथवा संयोजनयुक्तपञ्चामृतविधानं कुर्यात् । तस्यायं क्रमः—

पूर्ववदुपक्लृप्ते व्रीहिमये स्थण्डिले पूर्वादिदिक्षु मद्ध्येच पञ्च कोष्ठानिशानदिशि अष्टदळपद्मञ्च विलिख्य शिवनियतिकालव्यक्ताव्यक्तसुमङ्गळानामभिःषड्भिर्मद्ध्यादिक्रमेण तानिसंपूज्य तेषु षट्पात्राणि अमृतसोमविधारत्नोदक सुधाप्रीत सुरप्रीतनामभिस्संपूज्य पूर्वोक्तक्रमेण मद्ध्यादिपात्रेषु पञ्चामृतानि ऐशानकोणपात्रे नाळिकेरोदकञ्च निक्षिप्य तानि पञ्चगव्य-

कुशोदकवदभिमन्त्र्य शर्करादीनि गोमयादिवत् क्रमेण क्षीरे संयोज्य कुशोदकवन्नाळिकेरोदकंच संयोजयेत् । ततस्समृद्धं कदळीफलं मूलाभिमन्त्रितं क्षिप्त्वा मूलेन मर्दयेत् । पञ्चगव्यवद्गन्धपुष्पाद्युपचरांश्च कुर्यात् । पञ्चगव्याद्यर्थं मुक्तद्रव्याभावे दधिक्षीरेपरस्परङ्गोमयगोमूत्रेच परस्परं प्रतिनिधिः । शर्करायाः इक्षुरसः । पञ्चगव्याद्युक्तपात्रद्रव्यपरिमाणालाभे गोमयमङ्गुष्ठार्धमानं गोमूत्रघृतदधिक्षीरकुशोदकान्येकद्वित्रिपञ्चैकपलानि ग्राह्याणि । पञ्चामृते क्षीरादीनि देवस्य लिङ्गसेक्ताहाणिग्राह्याणि । गवामुक्तवर्णानामभावे निर्दोषाया स्सवत्साया रोगगर्भरहिताया गोः क्षीरादीनि ग्राह्याणि । क्षीरं वत्सलालाजलास्पृष्टं दध्यमथ्यङ्गोमयमाकाशस्थं घृतं गोमूत्रंच वस्त्रपूतं ग्राह्यम् ॥

॥ स्नपनोदकविधानम् ॥

---

अथ स्नपनोदकविधानमुच्यते-शुद्धं जलकुम्भमादाय शिवाल्लब्धानुज्ञः प्रशस्तवर्णगन्धरसनदीतटाकं देवखातादिशुद्धतीर्थे गत्वा तज्जलं ब्रह्माङ्गैरभिमन्त्र्यास्त्रसंक्षाळितं कुंभं वस्त्रपूतेन तेन हृदयमन्त्रेणापूर्य आहृत्य देवस्य दक्षिणभागे स्थापयित्वा एलोशीरलवङ्गकर्पूर वारिपाटलोत्पल पद्मकरवीरादिवासितं कुर्यात् । इदं पञ्चगव्यपञ्चामृतस्तपनोदकसंविधानं आत्मशुद्धेर्द्वारपालार्चनाच्चप्रागेव कर्तव्यं । स्नपनोदकं सूर्यरहितेकालेनाहर्तव्यं । पुष्पाहरणमपि पूजकेनस्वयमेवकर्तव्यं । अशक्तौ समयालाभे च पुष्पोदकाहरणं गन्धघर्षणनैवेद्यपाकादिवत्स्नातैर्वाशुद्धवस्त्रैः पवित्रपाणिभिःपरिचारकैः करणीयं । छिन्नेपिष्ट इति न्यायसाम्यात् । एवं सकलमपि वक्ष्यमाणोपयोगद्रव्यजातं सन्निधाप्य तस्यशुद्धिं कुर्यात् ॥

---

## ॥ द्रव्यशुद्धिः ॥

तत्रायंक्रमः— अङ्गुष्ठानामिकास्पृष्टेन चक्षुषा मूलेन निरीक्ष्यमाणं दृक्क्रियेच्छात्मकै रर्कवह्निसोमनेत्रैः क्रमात् शुष्कं दग्धममृताप्लावितं च भावयेत् । ततश्शुद्ध्यर्थं मन्त्रमन्त्रेण पताकया प्रोक्ष्य चिच्छक्त्यभिव्यक्त्यर्थं अस्त्रमन्त्रेणैव मध्यमांगुळ्या ताडयेत् । ततोवौषडन्तकवचेन तत्सर्वं विशेषार्घ्यजलेन शङ्खजलेन वा कुशपुष्पै रभ्युक्षन् ताडितात्पाषाणा द्वह्नि-स्फुलिङ्गादिवत्तद्द्रव्यजाता चिदग्निस्फुलिङ्गाना मुद्गतिं ध्यायेत् । एवं निरीक्षणादिसंस्कारचतुष्टयेन द्रव्यजात मशुद्धेन मायारूपेण परित्यक्तं शुद्धचिच्छक्त्यात्मकं शिवयोग्यतार्हंभवति । ततस्सद्योजातेन गन्धं वामदेवेन वस्त्रं अघोरेणाभरणं तत्पुरुषेण नैवेद्य मीशानेन पुष्पं हृदयमन्त्रेणान्यानि शिवार्थद्रव्याणि आवरणपूजाद्यर्थद्रव्याणि चाभिमन्त्रयेत् । ततस्सर्वं द्रव्यजात मन्त्रेण संरक्ष्य कवचेनावकुण्ठ्य वौषडन्तशक्तिमन्त्रेण धेनुमुद्रया ऽमृतीकृत्य शिवार्थं कल्पित मेतत्सर्वं शिवात्मकमेवेति भावयन् गन्धपुष्पधूपदीपैः हृदयास्त्रमन्त्राभ्यां पूजयेत् । ततस्स्वशरीरस्यार्घ्यजलबिन्दुमस्त्रेण निक्षिप्य स्वासने शिवासनायनम इति पुष्पन्दत्वा स्वदेहे शिवमूर्तिं विन्यस्य फाले चन्दनतिलकं कृत्वा । स्वशिरसि पुष्पं स्वाहान्तमूलेन स्वशिरस्येवार्घ्यंच दद्यात्।(१)इत्यमात्मनि पशुबुद्धिं त्यक्त्वाशिववन्निर्मलज्ञानक्रियश्शुद्धोऽहमिति भावयन्नेवात्मानं पूजयेत् । इति द्रव्यशुद्धिः ॥ यद्यप्यात्मशुद्धिः प्रागभिहिता । तथाऽपि पूजाकर्तृकतया द्रव्यान्तरवत्पूजोपकरणत्वेन प्रविष्टस्य तस्य द्रव्यान्तरवदेव गन्धादिभिः पूजयेदिति तदन्तद्रव्यशुद्धिः ॥

---

१. मूलमन्त्रं दशवारं जपेदित्यधिकं पुस्तकान्तरे वर्तते ॥

## ॥ मन्त्रशुद्धिप्रकारः ॥



अथ मन्त्राणां दन्तताल्वोष्ठव्यापारजन्यमायिकाशुचिरूपनिर्हरणार्थं ऐश्वर्याधिकारि मलतिरोहितफलप्रदानसामर्थ्यादिनां तेषां सामर्थ्योन्मीलनार्थंच शुद्धिः कर्तव्या । तत्प्रकार उच्यते— हृदयाञ्जलिं बद्ध्वा बिन्द्वन्तब्रह्मरन्ध्रान्ताशिखान्तं ह्रस्वदीर्घप्लुतप्रणवादिनमोन्ततया क्रमेण त्रिवारं शनैर्मूलमन्त्रोच्चारणं कुर्यात् । ततो ब्रह्माङ्गादीनामपि तथैवोच्चारणं कुर्यात् । इत्थं मन्त्रशुद्धिं विधाय तदनन्तरं परिवारदेवतासद्भावे तदर्चनं कुर्यात् । कथं परिवारदेवतासद्भावः सशक्तिककेवलपूजने । इत्थं सूक्ष्मोक्तानि शुद्धकेवलमिश्राख्यान्यशक्तिकसशक्तिकसौरादिचण्डान्ताशिवपूजन मंशुमदुक्तेन केवलसहजमिश्रभेदेन प्रत्येकं त्रिविधानि । अंशुमति केवलं नामपरिवारदेवतारहितलिङ्गपूजनम् । सहजन्नाम वृषभगणेशस्कन्दपार्वतीरूपपरिवारचतुष्टयसहितलिङ्गपूजनम् । मिश्रंनाम महेश्वरनृत्तमूर्ति दक्षिणामूर्त्यादिभिरपि सहितस्य लिङ्गस्य पूजनम् । एवं केवलशुद्धं सहजशुद्धं मिश्रशुद्धं केवलकेवलं सहजकेवलं मिश्रकेवलं केवलमिश्रं सहजमिश्रं मिश्रमिश्रं चेति नवविधानि पूजनानि भवन्ति । तत्र शिवपूजारम्भात्प्राक् सूर्यपूजां तदनन्तरं चण्डपूजां च विधाय लिङ्गे शक्तिं विना केवलं शिवमावाह्य परिवारदेवतारहितस्य तस्य पूजनं केवलशुद्धम् । परिवारचतुष्टयसाहित्येन प्रागुक्तपूजनं सहजशुद्धम् महेश्वरादिभिरपि सह प्रागुक्तपूजनं मिश्रशुद्धं । आद्यन्तयोस्सूर्यादि चण्डपूजां विहाय लिङ्गे सशक्तिकं शिवमावाह्य परिवारार्चनं विना तत्पूजनं केवलकेवलम्। उक्तपूजनमेव परिवार चतुष्टयार्चनसाहितं सहजकेवलम् । महेश्वराद्यर्चासहितं मिश्रकेवलम् । आद्यन्तयोस्सूर्यचण्डपूजासहितं सशक्तिकस्याशक्तिकस्यवा परिवारदेवतारहितस्य लिङ्गे पूजनं केवल-

मिश्रम् । देवपरिवारचतुष्टयार्चनसहितं सहजमिश्रम् । महेश्वराद्यर्चादिभिरपि सहितं मिश्रमिश्रमिति । एवञ्च केवलकेवले परिवाराभावेऽपि सहजकेवले मिश्रकेवलेच परिवारसद्भावात् मन्त्रशुद्ध्यनन्तरं केवले परिवारार्चनकथनं युक्तमेव । तत्र वृषभं देवस्य पूर्वभागे पश्चिमाभिमुखमर्चयेत् । गणेशकुमारपार्वतीः पूर्वाभिमुखतया दक्षिणपश्चिमोत्तरदिक्ष्वर्चयेत् । पार्वत्या दुर्गारूपतयाऽर्चने दक्षिणाभिमुखत्वेनार्चयेत् । पौराणिकास्तु सूर्यगणेशविष्णुदुर्गारूपं परिवारदेवताचतुष्टयमाहुः । वृषभादिचतुष्टयेऽप्यारोग्यादिफलकामनायां परिवारदेवतामध्ये सूर्यादिपूजनमपि कर्तव्यमेव । वृषभस्य वामभागे सूर्यः देवस्य दक्षिणभागे दक्षिणामूर्तिः पश्चिमेस्कन्दस्य वामे विष्णुः उत्तरभागेदेव्याः प्राग्भागे नृत्तमूर्तिः । एवमन्येषामपि कामनया ऽर्चनीयाना मागमोक्तानि स्थानानि द्रष्टव्यानि ॥

॥ लिङ्गशुद्धिः ॥

अथ लिङ्गशुद्धिः—गर्भगृहे स्थितं देवस्य पेटक मुद्घाट्यतदग्रे स्थितं चतुर्भुजं त्रिणेत्रं वराभयच्छत्रचामरकरं भीमरुद्रमभ्यर्च्य । निशाचरान्तकृद्देव देवस्य यजनार्थकम् । शुद्धद्वारस्य सव्येतु गच्छत्वं हि प्रसीदमे ॥ इति संप्रार्थ्य पेटकमध्ये स्थितं देवं 'ओं नमोदेवदेवेशसर्वलोकैकनायक । उत्तिष्ठस्नानकर्मार्थ मात्मरक्षार्थमेवचे'ति संप्रार्थ्य लिङ्गं हस्ताभ्यां संगृह्य वस्त्रं विसृज्य प्रागेव पङ्क्त्यासनेनार्चितायां स्नानवेद्यां सुवर्णरजतकांस्यत्रपुसीसक्षीरवृक्षान्यतमनिर्मितायां उपानपद्मजगतीकंपकण्टकं पजगतीपद्मवाजिनयुक्तायां वृत्ताकारायां मध्योन्नताया मुपरिप्रसारितवस्त्रायां विन्यस्य लिङ्गे पूर्वेद्युरार्चितां पूजां हृदयमन्त्रेण संपूज्य शिरसीशानक्रमेण स्वाहान्तमूलेन सामान्यार्घ्यजलेनार्घ्यन्दत्वा धूपदीपौ प्रदर्श्य अंगुष्ठादिकानिष्ठान्तैःईशानादिपञ्चकं विन्यस्य कनिष्ठिकानामिकामध्ये पुष्पं संगृह्य अंगुष्ठतर्जनीभ्यां

लिङ्गमस्तकात्पूजां हृदयेनावरोप्य तत्पुष्पं लिङ्गमूर्ध्नि विन्यस्य निर्माल्यमी-शानदिशि हृदयेनशुद्धपात्रेनिधाय अस्त्रेणलिङ्गं पाशुपतास्त्रेण पीठं प्रक्षाल्य सामान्यार्घ्यजलेन स्वाहान्तं हृदाऽभिषिञ्चेत् । एवं कृते पूर्वपूजासमाप्तौ लिङ्गपीठविन्यस्तमन्त्रोपसंहारानन्तरं लिङ्गपीठयोरासक्ताः पूजकस्य भुक्ति-मुक्तिप्रतिबन्धकविघ्ना निरस्ता भवन्ति । लिङ्गञ्च हृदयाम्बुस्नपनेन शुद्धं पुनः मन्त्रविन्यासयोग्यं भवति । इति लिङ्गशुद्धिः ॥

ततश्शिवशक्तिभ्यां नम इति लिङ्गमुद्रां प्रदर्श्य आसनमूर्तिमूलै रष्ट-पुष्पिकयावा संपूज्य धूपदीपौ प्रदर्श्य सुवर्णरजतताम्रमयशंखशुक्तिगोशृ-ङ्गान्यतमपात्रेण चतुरंगुळदीर्घया गोशृङ्गाग्रप्रमाणया धारयाऽभिषिच्य, ह-स्तयन्त्रोद्भवतैलेन गोघृतेनवाऽभ्यज्य पिष्टचूर्णादिभिर्विरूक्ष्यकोष्णतोयेनाभि-षिच्य शिरसि पुष्पमारोप्य पञ्चगव्य प्रत्येक पञ्चामृतफलरससंयुक्तपञ्चामृते रन्तरान्तराशिरश्शिखानेत्रैः पुष्पधूपदीपसमर्पणपूर्वक मन्त्रमन्त्रेण घण्टां ताडयन्नभिषिञ्चेत् । एवं फलोदकादिभिस्सिञ्चेत् । तत्र फलोदकं नाम सुगन्धिजलं बिल्वक्पनसनारिकेळखण्ड सत्वग्दाडिमीबीजपूरपुन्नागलि-कुचनारङ्गचूतकदळीफलोपेतमुदकम् । यवनीवारव्रीहिमुद्गसिद्धार्थ सौ-गन्धिकहेमशालिव्रीजसहितमुदकं बीजोदकं । तेनाभिषिच्य मूलबीजेन गन्ध-पुष्पधूपदीपैरर्चयेत् । स्फटिकमुक्ताफलमाणिक्यविद्रुमगोमेदकपुष्यराग गा-रुडेन्द्रनीलसाहितमुदकं रत्नोदकं । तेनाभिषिच्य वर्णमन्त्रेण गन्धादि-भिरर्चयेत् । चन्दनागरुकस्तूरी कुंकुमकर्पूरमनाश्शिलैलाकुष्ठतक्कोलल्वङ्गो-शीरचम्पकमुकुळचूर्णसहितमुदकं गन्धोदकं । तेनाभिषिच्य गन्धपुष्पधूप-दीपनैवेद्यानि नाममन्त्रेण समर्पयेत् । चम्पकमल्लिकाकेतकीपाटलकुन्द-पुन्नागनन्द्यावर्तजातीमन्दारकरवीरपद्मोत्पलगिरिपुष्पयुक्तं ह्रीबेरदमनकादि-मिश्रितमुदकं पुष्पोदकं । तेनाभिषिच्य शिवमन्त्रेण गन्धपुष्पधूपदीपं दद्यात् । ततो नाममन्त्रं समुच्चरन्शुद्धेनान्नेन शनैश्शनैरभिषिच्य तदन्नंलिङ्गमभितास्थतं

लिङ्गाकृतिं कृत्वा गन्धपुष्पधूपदीपपायसांश्च तांबूलादिचदत्वा तदन्नं प्रक्षाल्यलिङ्गमूर्ध्नि मूलबीजं न्यस्य गन्धपुष्पधूपदीपं दत्वा ब्रह्ममन्त्रैरालभ्य धेनुमुद्रां बध्नीयात् । इदमन्नाभिषेचनमपमृत्युनिवारकम् । अयमायुरारोग्यराजराष्ट्राभिवृद्धिदंसकलवशीकरणं सर्वशांतिकरं च । ततो जलार्चनं च कुर्यात्। निरीक्षणादिसंस्कृतेन शुद्धजलेन हेमरजतताम्रयज्ञवृक्षजान्यतमपात्रं प्रपूर्य तन्मध्ये लिङ्गं संस्थाप्य दूर्वातिलाक्षतान्दत्वा गन्धपुष्पधूपदीपैरर्चयेत् । इदं जलार्चनं । ततस्समुद्धृत्य संमृज्य पूर्ववत् स्नाननैवेद्यं विन्यस्य नाळिकेरेक्षुरसादिभिरपि यथासंभवमभिषिञ्चेत् । शिवस्य घृताभ्यङ्गेन वर्षकोटिसहस्रार्जितं पापं नश्यति । मासं घृताभिषेकेण त्रिसप्तकुलोपेतस्य शिवपदप्राप्तिर्भवति । करयन्त्रोद्भवतिलतैलाभिषेकेण शिवपदप्राप्तिर्भवति । क्षीराभिषेकेणायुतसालङ्कारगोदानफलप्राप्तिर्भवति । दधिस्नपनेन सर्वपापक्षयपूर्वकं शिवलोकप्राप्तिर्भवति । मधुस्नपनेन सर्वपापक्षयपूर्वकं वह्निलोकप्राप्तिर्भवति । इक्षुरसस्नपनेन विद्याधरलोकप्राप्तिर्भवति। कर्पूरागरुतोयेन शिवपदप्राप्तिः । गन्धचन्दनतोयेन गन्धर्वलोकस्य पुष्पोदकेन सूर्यलोकस्य हेमोदकेन कुबेरलोकस्य रत्नोदकेन इन्द्रलोकस्य कुशोदकेन ब्रह्मलोकस्य प्राप्तिरित्यादि द्रष्टव्यम् । तत्र द्रव्यालाभे वस्त्रपूतेन शुद्धेन तोयेनाभिषिंचेत् । तेनापि सर्वकामसमृद्धवरुणलोकप्राप्तिरुक्ता ॥

ततोधाराभिषेचनं कुर्यात् । तच्चात्मार्थपूजायां द्वादशांगुळविस्तारमेकांगुळोत्सेधं यवत्रयघनमुत्तमम् । सप्तांगुळविस्तारमर्धांगुळोत्सेधं यवद्वयमात्रघनं मध्यमं। पञ्चांगुळविस्तारं पादांगुळोत्सेधं यवमात्रघनमधमं। तत्सुवर्णेन रजतेन ताम्रेण वा चतुरश्रं वृत्तं वा कर्तव्यं । चतुरश्रं चेन्नवकोष्ठानि विलिख्य मध्यकोष्ठस्य मध्ये रन्ध्रमेकं परितोष्टौ मद्ध्यकोष्ठस्यैव रेखायां महादिक्षु चत्वारि पूर्वादिकोष्टेषु प्रत्येकं द्वादशरन्ध्राणि चेत्येव मुत्तमपात्रस्यै-

कार्णिकान्यष्टोत्तरशतं रन्ध्राणि कुर्यात् । मद्ध्यकोष्ठस्यमद्ध्यरन्ध्रमेकं परितो वाष्टौ पूर्वादिकोष्ठेषु त्रीणित्रीणि रन्ध्राणीत्येवं मद्ध्यमपात्रस्य पञ्चविंशतिरन्ध्राणि कुर्यात् । वृत्तं चेदष्टदळपद्मं विलिख्य कर्णिकाया मद्ध्ये परितश्च नवरन्ध्राणि प्रतिदळं द्वादशरन्ध्राणि दळेभ्यो बहिर्वृत्ते महादिक्षु चत्वारिचोत्तमपात्रस्य कुर्यात् । इतरपात्रयोरष्टदळपद्मे चतुरश्रवत् द्रव्याणि द्रष्टव्यानि । एवंभूतं पात्रं देवस्योपरि हस्तधृतं कृत्वा शङ्खजलेनापूर्य हस्ताभ्यां धारयन् मूलेन धाराभिरभिषिंचेत् । एवमभिषेकार्थानिप्राक्संस्कृतपञ्चगव्यादिव्यतिरिक्तानि तैलादीन्यस्त्रेणसंप्रोक्ष्यकवचेनावकुण्ठ्यास्त्रेण संरक्ष्य हृदयबीजेनाभिषेचने विनियोजयेत् । एवं प्रपञ्चेनाभिषेकं कर्तुमशक्तश्शुद्धजलेनाभिषेचयेत् । ततो मूलेन मन्त्रपुष्पं दत्वा मन्त्रान्नं निवेद्य शुद्धमृदुवाससा शनैस्संमृज्य पद्मपीठे स्थापयेत् । तत उत्थाय शिवंप्रदक्षिणीकृत्य निर्ऋतिकोणस्थितवास्त्वधिपति ब्रह्मस्थानादुत्तररूपं शिवमन्दिरस्य वायुकोणं गत्वा तत्र श्यामवर्णं दन्ताक्षसूत्रपाशांकुशान्करैः पुष्करेण बीजपूरञ्च धारयन्तं दक्षिणाभिमुखमुपविष्टं गणपतिमावाहनादिसर्वोपचारैस्संपूज्य ॥ (श्लो) शिवार्चनं गणेशान निर्विघ्नं कुरुमेसदेति प्रार्थयेत् । ततः प्राग्भागे शिवखेटकस्योत्तरादिशारूपे श्रीफलकमलाभयधारिणीं त्रिणेत्रां शिवशक्तिरूपां दक्षिणाभिमुखीमुपविष्टां महालक्ष्मीं तथैव संपूज्य 'मातश्शिवार्चनद्रव्यसमृद्धिं कुरुमेसदे'ति प्रार्थयेत् । ततः प्राग्भागे शिवमन्दिरस्येशानकोणरूपे सदाशिवानन्तश्रीकण्ठांबिकागुहविष्णुधातृरूपान् प्रसन्नवदनान्योगपट्टधरान्व्याख्यामुद्राक्षसूत्रविराजितकरद्वयान् गौरवर्णान्दक्षिणामुखमुपविष्टान्सप्तगुरून्वा 'शिवादिस्वरूपगुरुपर्यन्तान्सर्वान्गुरून्वा तथैव सर्वोपचारैस्संपूज्य 'शिवादिगुरवो मह्य मनुज्ञां दातुमर्हथ । शिवार्चनं करिष्येहं युष्मद्दर्शितमार्गतः' इति प्रार्थयेत् ॥ गुरुस्थाने श्रीगुरुपादुकाभ्यां नम

इति पादुकेत्रा पूजयित्वा गणपतिमहालक्ष्मीगुरुपादुकानां पूजानन्तरं सर्वान्प्रणम्य क्षितितलनिहितनिश्चलजानुः बद्धांजलिः 'गणनाथांबिकेस्वामिपादुके मां जगद्गुरो । यजन्तमनुजानीत यथासंपन्नकारक'मिति युगपत्प्रार्थयेत् । अथ तेभ्यस्सकाशात्पुत्र शिवं यजस्वेति अनुज्ञालाभं भावयित्वा देवस्याग्नेयकोणे दक्षिणभागे वा रुचिराद्यासने स्थितः प्रत्येकं दशमात्रैः पूरककुंभकरेचकैस्सहितं प्राणायामत्रयं कृत्वा स्वेष्टफलाभिसन्धिपूर्वकं यथाशक्ति शिवार्चनं करिष्ये इति सङ्कल्प्य पूजामारभेत ॥

तत्र प्रथमं (१) शिवार्चनं । तच्चकन्दनाळग्रन्थिदळकेसरकर्णिकाविभक्तकमलरूपं क्षित्यादिशुद्धविद्यान्तद्वात्रिंशत्तत्वपर्यन्तोच्छ्रायं उपरिस्थितयामूर्त्यासह निवृत्यादिशांतिकलापर्यन्तोच्छ्रायं । तदुपरिशान्त्यतीतकलाप्रमाणो विद्यादेहः। तत्स्वरूपपरिज्ञानार्थं निवृत्यादिकलाप्रमाणं तदन्तर्गततत्त्वस्वरूपञ्च विविच्यते। निवृत्यादिकलाशतकोटियोजनप्रमाणब्रह्माण्डरूपा। तत्रैकं पृथिवीतत्वं। तदुपरि सहस्रकोटियोजनप्रमाणा प्रतिष्ठाकला । तत्र जलादिभूतचतुष्टयगन्धादितन्मात्रपञ्चककर्मेन्द्रियपञ्चकज्ञानेन्द्रियपञ्चकमनोहङ्कारबुद्धिप्रकृतिरूपाणि त्रयोविंशतितत्वानि । तदुपरि अयुतकोटियोजनप्रमाणाविद्याकला । तत्र पुरुषरागनियति कलाविद्याकालमायारूपाणि सप्ततत्वानि। तदुपरि लक्षकोटियोजनप्रमाणाशान्तिकला । तत्र शुद्धविद्यामहेश्वरश्चेति द्वे तत्वे। तदुपरि दशलक्षकोटियोजनप्रमाणाशान्त्यतीतकला । तत्र सदाशिवश्शक्तिश्चेति द्वे तत्वे। तदुपरि अप्रमेयं शिवतत्वं निवृत्तिकलात्मकं पृथिवीतत्वं यावत्कन्दं प्रतिष्ठाकलाविद्याकलान्तर्गतानि जलादिकालान्तान्येकोनत्रिंशत्तत्वानि यावन्नाळः । जलादिकालान्ततत्वेषु स्थितानि पञ्चसप्ततिभुवनानि कण्टकाः । तत्तद्भुवनान्तर्गतप्राणिनां बुद्धिधर्माः पञ्चाशत्भुवननाळान्तर्गतसूत्राणि । विद्याक-

(१) शिवासनार्चनमिति पाठभेदः ।

कायमिव कालस्योपरि स्थितं मायातत्वं पद्मनाळग्रन्थिः।शान्तिकलायां स्थितं शुद्धविद्यातत्वदळकेसरकार्णिकात्मकं पद्मं। शुद्धविद्याया उपरि स्थितं महेश्वरतत्वं यावत् शिवस्य सूक्ष्ममूर्तिः। शान्त्यतीतकलायां स्थितं सदाशिवशक्तितत्वद्वयं यावद्विद्यादेहः। नाळे स्थितानि भुवनानि च जलानलवायुगगनाहङ्कारबुद्धिप्रकृतिषु प्रत्येकमष्टावष्टौ भुवनानीति षट्पञ्चाशत् पुरुषे षट् रागे पञ्च नियतौ द्वे कलायां द्वे विद्यायांद्वे काले द्वे इति पुरुषादिकालान्तेषु भुवनानि एकोनविंशतिरित्येवं पञ्च सप्ततिभुवनानि कण्टकाः। तमोमोहमहामोहतामिस्रान्धतामिस्ररूपाः पञ्चविपर्ययाः । ऊहश्शब्दोध्ययनं दुःखत्रयविघातस्सुहृत्प्राप्तिर्दानं चेत्यष्टौसिद्धयः । आध्यात्मिकाः प्रकृत्युपादानकालभागाख्याश्च । तिस्रो विषयाः परमकृताबाह्याः पञ्चेति नवच तुष्टयः अन्धत्वमूकत्वादय एकादशेन्द्रियविधाः अनूहादयस्सप्तदशप्रागुक्तसिद्धिबुद्धिविधाश्चेत्यष्टाविंशतिशक्तयः इति पञ्चाशद्भावाः नाळसूत्राणि। अत्र कन्दनाळादियोजनप्रमाणसमये मतान्तरं प्रदर्श्यते । निवृत्तिकलात्मकं पृथिवीतत्वं पूर्ववच्छतकोटियोजनमेव । पृथिवीतत्वाद्दशगुणं जलं, जलतत्वाद्दशगुणोवह्निः, वह्नितत्वाद्दशगुणो वायुः, वायोर्दशगुणं व्योम, ततोदशगुणोऽहङ्कारः, अहङ्काराद्दशगुणा बुद्धिः, बुद्धे र्दशगुणं गुणतत्वम्। एवं गुणतत्वपर्यन्तं दशसङ्ख्यया वृद्धिः । अतः परं मायातत्वपर्यन्तं शतसङ्ख्यया वृद्धिः। गुणतत्वाच्छतगुणा प्रकृतिः। प्रकृतेश्शतगुणोरागः। रागाच्छतगुणा नियतिः । नियतेश्शतगुणा विद्या । ततश्शतगुणा कला । ततश्शतगुणः कालः । ततश्शतगुणा माया । शुद्धविद्येश्वर सदाशिवानां सहस्रसङ्ख्ययावृद्धिः। मायायास्सहस्रगुणा शुद्धविद्या। शुद्धविद्यायास्सहस्रगुण ईश्वरः । ईश्वरात् सहस्रगुणस्सदाशिव इति । ततो लक्षसङ्ख्ययावृद्धिः। सदाशिवतत्वाल्लक्षगुणा शक्तिरिति । ततश्शिवतत्वमप्रमेयम्। इदं च मतं प्रकृतेः पूर्वं गुणतत्वमङ्गीकृत्य प्रकृतेरनन्तरं पुरुषतत्वम-

नङ्गीकृत्य च प्रवृत्तम् । तथाचाहुः— (श्लो) 'क्ष्मातत्वं शतकोटियोजनमपः प्रारभ्य गौणान्तकं पङ्क्त्या तद्गणनात्तथा प्रकृतितो मायावसानं शतात् । साहस्राच्च सदाशिवावधि ततश्शक्त्यन्तकं लक्षत स्तस्योर्द्ध्वे सशिवोऽप्यमेयविभवो बिन्दोरधिष्ठायकः' इति ॥ एवंसति नाळः कियद्योजनसंख्यो जात इति चेत् असंख्ययोजन एव । तथाऽपि किञ्चित्प्रकारमारोप्य योजनसङ्ख्या प्रदर्श्यते—एकत्वमारभ्य उत्तरोत्तरं दशगुणवृद्धौ क्रियमाणायां विंशतितमं स्थानं परार्धसङ्ख्या । स सर्वान्तिमसङ्ख्या । विंशतेश्च स्थानाना मेतानि नामानि । एकं दश शतं सहस्र मयुतं लक्षं प्रयुतं कोटि रर्बुदं पद्मं खर्वं निखर्वं बृन्दं महापद्मं शङ्खो महाशङ्ख स्समुद्रो महासमुद्रो मध्यं परार्द्ध इति ॥ तथाचाहुः— 'एकं पङ्क्तिशते सहस्रमयुतं लक्षं प्रपूर्वायुतं कोटिश्चार्बुदकंच पद्मक मथो खर्वं निखर्वं तथा । बृन्दं चैव महासरोज मपर श्शंख स्समुद्रोऽन्तिमो मध्यं चैव परार्धसंज्ञक मिमां सङ्ख्यां विदुः पण्डिताः' इति ॥ एवञ्च शतकोटिसङ्ख्या मेकत्वस्थाने निवेश्य जलतत्वादीनां सङ्ख्याक्रियते । शतकोटिर्नाम पद्मसङ्ख्या । ततश्च पद्मयोजनं पृथिवीतत्वम् । एकयोजनं जलतत्वं, दशयोजनं तेजस्तत्वं, शतयोजनं वायुतत्वं, सहस्रयोजनं गगनतत्वं, अयुतयोजनमहङ्कारतत्वं, लक्षयोजना बुद्धिः, प्रयुतयोजनं गुणतत्वं, कोटियोजनं ततः परं शतसंख्यया वर्द्धनीयत्वात् एकान्तारितसंख्याग्राह्या । यथा— प्रकृतिः पद्मयोजना, रागो निखर्वयोजनः, नियतिर्महापद्मयोजना, विद्या महाशङ्खयोजना, कला समुद्रयोजना, कालः परार्धयोजन इति । एवञ्च जलादिकालान्ततत्वसमुदायरूपो नाळो दशशत सहस्रायुत लक्षप्रयुत कोटिपद्म निखर्वमहापद्म महाशङ्खमहासमुद्रपरार्धाख्यत्रयोदशसङ्ख्यासमुदायसङ्ख्येययोजनापरिमितोभवति । पद्मसङ्ख्याया मेकतत्वरूपता मनारोप्य परार्धाधिके सङ्ख्यासद्भाव मारोप्य गणनेतु नाळः खर्वं निखर्वं बृन्द महापद्म शङ्ख महाशङ्ख समुद्रमध्य-

दशगुणितपरार्ध सहस्रगुणितपरार्ध लक्षगुणितपरार्ध कोटिगुणिपरार्धरूप-त्रयोदशसङ्ख्यासमुदायसङ्ख्येययोजनोछ्रायो भवति । नाळान्तर्गतानामपि भुवनाना माधारणं गन्धादिपञ्चक कर्मेन्द्रियपञ्चक ज्ञानेन्द्रियपञ्चकमनसां पृथग्योजनसङ्ख्या नास्तीति मताश्रयाणां तेषु योजनसङ्ख्या नगणिता । अथ तेषामपि ( भुवनाधारतया ) पृथग्योजनसङ्ख्यामाश्रित्य मतान्तरं प्रदर्श्यते ॥

पद्मयोजनपरिमाणात् भूतत्वाज्जलादिमनोन्तानां विंशतेस्तत्वाना मुत्तरोत्तरं दशगुणा वृद्धिः । अहङ्कारबुद्ध्योश्शतगुणा । प्रकृतेस्सहस्रगुणा । पुरुषस्यायुतगुणा । नियतिकालयोर्लक्षगुणा । रागविद्याकलानां दशलक्षगुणा । मायायाः कोटिगुणा । शुद्धविद्यायाः दशकोटिगुणा । ईश्वरस्य शतकोटिगुणा । सदाशिवस्य सहस्रकोटिगुणा । शक्तेरयुतकोटिगुणा । शिवतत्वस्य नास्ति योजनसङ्ख्या इति । पुरुषमायामध्यवर्तितत्वानां पञ्चानामूर्ध्वाधरभावे क्रमभेदमाश्रित्येदं मतान्तरं प्रवृत्तम् । अस्मिन्मते क्षित्यादिमनोंतानि एकविंशतितत्वान्युत्तरोत्तरं दशगुणवृद्ध्या क्रमा देकदशशत सहस्रायुत लक्ष प्रयुतकोट्यर्बुद पद्मखर्व निखर्व बृन्दमहापद्मशंखमहाशङ्ख समुद्र महासमुद्र मद्ध्य परार्ध दशपरार्ध योजनानि । अहङ्कारबुद्धी शतगुणवृध्या क्रमात् सहस्रगुणित लक्षगुणित परार्धयोजने। प्रकृतिस्सहस्रगुणवृद्ध्याऽर्बुदगुणितपरार्धयोजना । पुरुषस्ततोऽयुतगुणवृद्ध्याबृन्दगुणितपरार्धयोजनः । नियतिकालौ लक्षगुणवृद्ध्या क्रमात् महासमुद्रगुणितसहस्र परार्धगुणितपरार्धयोजनौ । रागविद्याकलास्तु दशलक्षगुणवृद्ध्या क्रमात् पद्मपरार्धगुणितमहाशंख परार्धगुणितशत परार्धहतपरार्धगुणित परार्धयोजनाः । एवंचास्मिन्पक्षे जलादि कलांत तत्वसमुदायरूपो नाळो दशादिशतपरार्धाहत परार्धगुणितपरार्धपर्यन्तकोनत्रिंशत्संख्या-

समुदाय संख्येय योजनापरिमितो भवति । अस्मिन्तत्ववृद्ध्याश्रयणेनप्रवृत्ते पक्षद्वयेऽपि नाळात् ग्रन्थेः पद्मस्य चातिदैर्घ्यं स्यात् । तथाहि— अत्र प्रथमपक्षे तावत् नाळान्तर्गतेषु तत्वेषु कालएकः परार्धयोजनः । कला तच्छतांशपरिमितैव । विद्यानियतिपूर्वकपूर्वतत्वानि तच्छतांशपरिमितानीति नाळः किञ्चिदधिकैकपरार्धयोजनः । मायारूपोग्रन्थिस्तु शतगुणितपरार्धयोजनः । कालाच्छतगुणत्वान्मायायाः पद्मं लक्षगुणितपरार्धयोजनम् । पद्मरूपायाश्शुद्धविद्याया मायापेक्षया सहस्रगुणितत्वा दित्थं पक्षान्तरेऽपि ग्रन्थिपद्मयोजनदैर्घ्यं स्यात् । एवं कन्दप्रभृति नाळापेक्षयाग्रन्थेः पद्मस्यच दैर्घ्यं न लौकिकपद्मच्छायानुकारि नवनाभिकन्दादिहृत्प्रदेशांतःहृत्पद्मच्छायानुकारि । अतः कलावृद्धिपक्षाश्रयणमेव शिवासनपद्मभावनायामनुकूलम् । इदञ्च कमलं अनन्तासन सिंहासन योगासन पद्मासन विमलासनरूप पञ्चासनगर्भम् । तत्रपृथिवीतत्वपरिमितकन्द एवाधारशक्तिः । जलादि कालान्त तत्वपरिमितो नाळ एव तदुपरिस्थितपद्ममुकुळसहितस्सन् आधारशक्तिरूप क्षीरोदसमुत्थितफणामणिमण्डलसहित भुजङ्गमाकृतिशालि विद्येश्वराष्टकान्तर्गतानन्तरुद्रैतदुभय मनन्तासनमुच्यते । नाळाद्यवधि जलतत्वप्रभृति गुणतत्वपर्यन्तं नाळं परितःस्थितं सिंहासनम् । तत उपरि ग्रन्थिपर्यन्तं योगासनम् । तदुपरि दळकेसररूपं पद्मासनम् । कर्णिकैव विमलासनम् । कर्णिकोपरिस्थितगुणत्रय मण्डलत्रयतत्वत्रयात्मकं वा । यद्यप्यनन्तः सहस्रफणामण्डितः सर्पत्वेनोक्त इति तस्य भोगदण्ड एवोर्द्ध्वाकारस्थितो नाळः, सङ्कुचितं तत्फणामण्डलमेवात्र मुकुळं, नतु तद्व्यतिरेकेण पद्ममस्ति, तथाऽपि तदेव विकासध्यानदशाया मष्टदळपद्मरूपेण भावनीयमिति पद्मासनमुच्यते । यद्वा वृत्ताकारं कोटिसूर्याभं सिंहासनाद्यधस्थित मनन्तभोगिरूप मनन्तपङ्कजरूपं नाळादन्यदेवानन्तासनं वृत्ताकारमुपर्युपरिस्थितानन्त वासुकि तक्षक कार्कोटक पद्म महापद्म शङ्ख-

गुळिकान्त्याष्टमहानागरूपं वा । अथवा एवमनन्तासनं भावनीयम्— सिंहासनस्याधस्ताद्वषासिंह्मभूतकुञ्जराकार धर्मादिपादचतुष्टयस्य अधर्मादिफलकचतुष्टयस्य मध्यस्योपरि फणपञ्चकेन पुच्छेन च सहितः फणामध्ये पुरुषाकारः क्षौमवस्त्रपरीधान स्सर्वाभरणभूषितः वराभयधरकरद्वयो नागराजः । तत्परितः पूर्वादिदिक्षु अनन्ताद्याः गुळिकान्ता एकफणाः कृताञ्जलिपुटा नागराजा ईक्षमाणा महानागाः नागराजस्यशिरसिप्रफुल्लाष्टदळयुक्तं अनन्तपङ्कजमिति। अत्रादिमपक्षमेवावलंब्य शिवासनस्यार्चनाक्रमः प्रदर्श्य ते।

हामाधारशक्तये नमः। शतकोटियोजनप्रमाणब्रह्माण्डाकारपृथिवीतत्त्वपरिमाणशिवासनपद्मकन्दरूपां धवळवर्णां पाशांकुशाभयवरधारिणी माधारशक्तिं पूजयामि । अनन्तासनाय नमः । जलादिकलान्ततत्वपरिमाणनाळरूपं मायाग्रन्थिसहित मेकादशसहस्त्रकोटियोजनोच्छ्रायंवा दशशतसहस्त्रायुत लक्षप्रयुत कोट्यर्बुद पद्मखर्व निखर्व बृन्दमहापद्म शङ्खमहाशङ्ख समुद्र महासमुद्र मध्यपरार्ध दशशतगुणितपरार्धसहस्त्रगुणितपरार्धलक्षगुणितपरार्धार्बुदगुणित बृन्दगुणितपरार्ध महासमुद्रगुणितपरार्ध सहस्त्रपरार्ध गुणितपरार्ध पद्मपरार्धे गुणित परार्धे गुणितपरार्ध महाशङ्खपरार्धगुणितपरार्ध शतपरार्धाहतपरार्धगुणितपरार्ध पद्मपरार्धाहतपरार्धगुणितपरार्धरूपात्रिंशत्सङ्ख्यागुणित पद्मसङ्ख्यासमुदाय सङ्ख्येययोजनोच्छ्रायं वातदुपरि सहस्त्रफणामण्डलरूपाब्जमुकुळालंकृत मेकवक्त्रं चतुर्भुजं हृदये नमस्कारमुद्रासहित मनन्तरुद्ररूपमनन्तासनं पूजयामि । हां शिवासनपद्मनाळकण्टकेभ्यो नमः । पृथिवीकन्दोद्गतशिवासनपद्मनाळावयवेभ्यो जलादिकलान्ततत्वाश्रितामरेशप्रभासनैमिशपुष्करापाडिडिंडिमुण्डि भारभूतल शुद्धीश्वर हरिश्चन्द्र श्रीशैल जप्येश्वर आम्रातकेश्वर मद्ध्यमेश्वर महाकाळ केदार भैरव गया कुरुक्षेत्र नाखल कनकाखल विमलेश्वर अट्टहास महेन्द्र भीमेश्वर अविमुक्त वस्त्रापद-

रुद्रकोटि महाळय गोकर्ण भद्रकर्ण स्वर्णाक्ष स्थाणु च्छगलण्ड द्विरण्ड म-
हाकोट मण्डलेश्वर काळाञ्जन शंकुकर्ण स्थूलेश्वर स्थलेश्वर पैशाच रा-
क्षस यक्षगन्धर्व ऐन्द्र सौम्य प्राजापत्य ब्राह्माकृतकृत भैरव ब्रह्मवैष्णव-
कौमार नाळ श्रीकण्ठ वामदेव भीमोग्र भव ईशान एकवीर प्रचण्ड उमा-
पति अज अनन्त एकशिव कोध चण्ड द्युति संवर्त शूर पञ्चान्तक एक-
वीर शिखेद नामधेय सप्ततिभुवनरूपान् कण्टकान्पूजयामि । हां सूत्रे-
भ्यो नमः । पञ्चविपर्ययाष्टसिद्धि नवतुष्टयष्टाविंशति शक्तिरूप पञ्चाशद्गात्र-
नात्मकानि शिवासनपद्मनालसूत्राणि पूजयामि ॥

एवमनन्तासनात्मकनालपूजानन्तरं नाळं परितः स्थितं सिंहासनं योगासनंच पूजयेत् । हां धर्माय नमः । शिवासनस्याग्नेयकोणे पादरूपं सिंहाकारं जलादिगुणतत्वपर्यन्तोन्नतं आग्नेयाभिमुखं विवृतास्यं परिवृत्त-कन्धरं वायव्यकोणसिंहावलोकिनं कोटिसिंहपरिवारितं कर्पूरवर्णं धर्मं पूजयामि । हां ज्ञानाय नमः । शिवसिंहासनस्य नैर्ऋतकोणपादरूपं सिंहाकारं जलादिगुणपर्यन्तोन्नतं नैर्ऋताभिमुखं विवृतास्यं परिवृत्तक-न्धरं ईशानकोणसिंहावलोकिनं कोटिसिंहपरिवारितं कुंकुमवर्णं ज्ञानं पू-जयामि । हां वैराग्याय नमः । शिवसिंहासनस्य वायव्यकोणपादरूपं सिंहाकारं जलादिगुणतत्वपर्यन्तोन्नतं वायव्याभिमुखं विवृतास्यं परिवृत्त-कन्धर माग्नेय कोणसिंहावलोकिनं कोटिसिंहपरिवारितं सुवर्णवर्णं वैरा-ग्यं पूजयामि । हामैश्वर्याय नमः । शिवसिंहासनस्यैशानकोणपादरूपं सिं-हाकारमैशानाभिमुखं जलादिगुणतत्वपर्यन्तोन्नतं विवृतास्यं पूर्ववृत्तकन्धर नैर्ऋतकोणसिंहावलोकिनं कोटिसिंहपरिवारितं मेघवर्णमैश्वर्यं पूजयामि । हामधर्माय नमः । शिवसिंहासनस्य पूर्वफलकरूपं श्वेतकृष्णवर्णं पुरुषा-कारं दक्षिणशिरसमुत्तरपाद मधोमुख मधर्मं पूजयामि । हामज्ञानाय

नमः । शिवसिंहासनस्य दक्षिणफलकरूपं श्वेतरक्तवर्णं पुरुषाकारं पूर्वशिरःपश्चिमपादं अधोमुखमज्ञानं पूजयामि । हाँ अवैराग्याय नमः । शिवसिंहासनस्य पश्चिमफलकरूपं रक्तपीतवर्णं पुरुषाकारं उत्तरशिरसं दक्षिणपाद मधोमुख मवैराग्यं पूजयामि । हामनैश्वर्याय नमः । शिवसिंहासनस्य उत्तरफलकरूपं पीतकृष्णवर्णं पुरुषाकारं पश्चिमशिरसं पूर्वपाद मधोमुख मनैश्वर्यं पूजयामि । तदन्तरं हां शिवसिंहासनाय नमः इतिसमस्तं सिंहासनं संपूज्य योगासनं पूजयेत् ॥

तस्य श्वेतरक्तपीतकृष्णवर्णानि भूतरूपाणि कृतत्रेताद्वापरकलियुगान्याग्नेयादिपादत्वेन अव्यक्तनियतिकलाकालान् स्फटिककाळमेघदाडिमीपुष्पभिन्नाञ्जनवर्णान्पूर्वादिफलकत्वेन चाभ्यर्च्य हां शिवयोगासनमध्यफलकरूपाय श्रीमहाविष्णवे नमः इति मध्ये नीलवर्णं त्रिणेत्रं शङ्खचक्रवराभयकरं विष्णुं पूजयेत् । ततो रजोगुणारुणाय तमोगुणतूलभरिताय मायारूपाय अधश्छदाय नमः । इति योगासनस्य ऊर्द्ध्व मेखलायाअधोभाग प्रसारितं शयनीयरूपमधश्छदनं नैर्ऋतकोणे संपूज्य । हां सत्वगवणधवलिताय शुद्धमायारूपोर्द्ध्वच्छदनायनमः । इति मेखलाया उपरि शयनीयोत्तरच्छदनरूप मूर्द्ध्वच्छदनं नैर्ऋतकोणेच संपूज्य हां शिवयोगासनायनम इति समस्तं योगासनं पूजयेत् । योगासनविमलासने विना त्र्यासनात्मकमेव शिवासनमिति पक्षे शिवासनमेव मायाग्रन्थिपर्यन्तोन्नतं भावयित्वा तत्पादफलकार्चनानन्तर माग्नेयादिकोणेषु स्थित तदीयफलकद्वय सन्धानकीलत्वेन कृतयुगादिचतुष्टय मभ्यर्च्य तन्मध्ये फलकत्वेनैव श्रीमहाविष्णुं पूजयित्वाऽधश्छदनमूर्द्ध्वच्छदनंच पूजयेत् । ततोऽनन्तफणामण्डलरूपं पद्ममुकुळ विकासितं भावयित्वा तस्य दळकेसरा नर्चयेत् । हां शिवासनपद्मदळेभ्योनमः । अष्टविद्येश्वररूपाणि धवळवर्णानि शिवासनपद्मस्य दळा-

नि पूजयामि । हां केसरेभ्योनमः । मूले सुवर्णवर्णानि मद्ध्ये विद्रुमवर्णानि मुक्ताफलाकृतिशिरोलङ्कृतानि चतुष्षष्टिकलारूपाणि वामादिशक्तिसहिताष्टरुद्ररूपाणिवा केसराणि पूजयामि । केसराणा मष्टरुद्ररूपत्वपक्षे अष्टावष्टौ केसराण्येकैकरुद्रत्वेन भावनीयानि । अथवा फणारूपदलसहस्रयुक्तस्य अनन्तपङ्कजस्य केसराण्यपि सहस्रं सन्ति । तानि सर्वाणि पञ्चविंशत्युत्तरशतसङ्ख्ययाऽष्टधा विभज्य वामाद्यष्टरुद्ररूपेण पूजनीयानि । कर्णिकासहितान्यष्टावेववा केसराणि तथा पूजनीयानि । अयं न्यायोऽष्टविद्येश्वररूपतया पूजनीयेषु दळेष्वपि योजनीयः । हां कर्णिकायै नमः । विमलां शक्तिरूपां कनकवर्णां शिवासनपद्मकर्णिकां पूजयामि । हां बीजेभ्योनमः । वामादिनवशक्तिरूपाणि वा पञ्चाशद्वर्णरूपाणि वा शिवासनपद्मकर्णिकाबीजानि पूजयामि । ततस्सर्वावयवयुक्तं पद्मं विभाव्य हां पद्मासनाय नमः इति संपूज्य हां पद्ममुद्रायै नमः इति पद्ममुद्रां प्रदर्शयेत् । ततः पूर्वादिप्रादक्षिण्येनाष्टस्वष्टसु केसरेषु वामादीरष्टौ शक्तीरेकैकशः पूजयेत् । वामायै नमः । ज्येष्ठायैनमः । रौद्र्यै नमः । काळ्यै नमः । कलविकरिण्यैनमः । बलविकरिण्यै नमः । बलप्रमथिन्यै नमः । सर्वभूतदमन्यै नमः । अरुणवस्त्रा श्चामरधारिणी श्शिवासनन्यस्तैकहस्ता श्शिवाभिमुख्येन केसरेषु स्थिता वामादिशक्तीः पूजयामि । मनोन्मन्यैनमः । स्फटिकवर्णां पाशाङ्कुशाभयवरधारिणीं शिवासनपद्मकर्णिकायामीशानदिशि मध्ये-ईशानदिशि वा स्थितां मनोन्मनीं पूजयामि । ततस्साधिपतिकानि सूर्यसोमाग्निशक्तिमण्डलान्युपर्युपरि पूजयेत् । हां सूर्यमण्डलाय नमः । कोटिसूर्यप्रतीकाशं शिवपद्मासनदळाग्रव्यापकं सूर्यमण्डलं पूजयामि । हां सूर्यमण्डलाधिपतये ब्रह्मणे नमः । पञ्चवक्त्रं चतुर्बाहुं प्रतिवक्त्रं त्रिलोचनम् ।

तप्तचामीकराभासं नमोमुद्रासमन्वितम् ॥ सृष्टिकारण (१)कारणमात्म-तत्वरूपिणं सूर्यमण्डलाधिपतिं ब्रह्माणं पूजयामि । हां सोममण्डलायनमः । शिवासनपद्मकेसराग्रव्यापकं कोटिशीतांशुशीतळं सोममण्डलं पूजयामि । हां सोममण्डलाधिपतये विष्णवे नमः । मेघश्यामं शङ्खचक्रनमस्कारमुद्रान्वितकरचतुष्टयं स्थितिकारण (२) कारणं सोममण्डलाधिपतिं विष्णुं पूजयामि । हां अग्निमण्डलायनमः । शिवासनपद्मकर्णिकाग्रव्यापकं वह्नि-मण्डलं पूजयामि । हां वह्निमण्डलाधिपतये रुद्रायनमः । माणिक्यवर्णं शूलानलनमोमुद्रान्वितकरचतुष्टयं लयकारण (१) कारणं शिवतत्वरूपिणं वह्निमण्डलाधिपतिं रुद्रं पूजयामि । विमलासनं कर्णिकाव्यतिरिक्त-मिति पक्षे अग्नेयाद्यैशानान्तं गुणत्रयं दक्षिणाद्युत्तरान्तं मण्डलत्रयं नैर्ऋत्यादिवायव्यान्तं तत्वत्रयंच पूजयित्वा हां विमलासनायनमः इति समस्त-मिदं विमलासनं पूजयेत् ॥

तदनन्तरं मध्ये हां शक्तिमण्डलाय नमः । धवळवर्णं मण्डलत्रयव्यापकमिच्छाशक्तिरूपशक्तिमण्डलं पूजयामि । हां शक्तिमण्डलाधिपतये महेश्व-रायनमः । स्फटिकवर्णमष्टहस्तं खड्गात्रिशूलबाणाक्षमालाकमण्डल्वभय-करारविन्दधारिणं शक्तिमण्डलाधिपतिं महेश्वरं पूजयामि । ततस्समस्तं शिवासनं विभाव्य तदुपरि हां शिवासनायनमइति ज्ञानशक्त्यात्मकं शिवा-सनं पूजयेत् । अस्यामासनपरंपराया माधारशक्तिमात्मार्थपूजायां ब्रह्म-शिलास्थानीये पद्मपीठे पूजयित्वा ऽनन्तप्रभृति शक्तिमण्डलान्तं लिङ्गवेदि-काया मुपर्युपरि लिङ्गनाभिपर्यन्तं पूजयेत् । एवं प्रत्येकं शिवासनावयव-

---

१. सृष्टिकारणमात्मतत्वेति पाठान्तरम् ।

२. स्थितिकारणं सोम इति पाठान्तरम् ।

(३) लयकारणं शिव इति पाठान्तरम् ।

पूजनाशक्तौ साङ्गोपाङ्गं शिवासनं विभाव्य हां शिवासनायनम इत्येवं पूजयेत् । अयमनेकासनगर्भशिवासनार्चनप्रकारः । यद्वा— आवाहने पद्ममनन्तं स्नाने विमलमर्चने योगासनं नैवेद्ये वस्त्रादिष्वन्येषूपचारेषु सिंहासनंच कल्पयेत् । अथवा सिंहासनं स्नाने अनन्तं वस्त्रे पद्ममाभरणगन्धपुष्पेषु विमलं नैवेद्ये योगमन्योपचारेषुच कल्पयेत् । एवं शिवासनं संपूज्य हां हं हां शिवमूर्तयेनम इति लिङ्गनाभेर्महेश्वरतत्वात्मिकां शिवस्य मूर्तिं स्थिरविद्युन्निभां दण्डाकारा मविभक्तावयवां संपूज्य लिङ्गदैर्घ्ये होमीशानमूर्ध्ने नम इत्यादिमन्त्रैर्दण्डभङ्ग्या मूर्द्धादिपादान्त मीशानादि त्रिन्यस्य सशक्तिक मशक्तिकं वा तत्तत्स्थानेष्वष्टात्रिंशत्कला न्यसेत् । शुद्धश्शशिन्यादिशक्तीरेव न्यसेत् । ततश्श्रीकण्ठादिन्यासञ्च विदध्यात् । एवं सदाशिवदेहसिद्ध्यर्थं न्यासान्कृत्वा हां हौं विद्यादेहायनम इति विभक्तावयवं सदाशिवं विद्यादेहं पूजयित्वा तत्स्वरूपं प्रपञ्चेन ध्यायेत् ॥

क्षित्यादिशुद्धविद्यान्ते कन्दनाळदळैर्युते । कर्णिकाकेसरैर्युक्ते सूर्यबिंबादिभूषिते ॥ ईश्वरान्तिकया मूर्त्या स्थिरविद्युत्प्रकाशया । अविभक्तावयवया भ्राजमानोपरिस्थले ॥ क्षित्यादीश्वरतत्वान्ते मूर्त्याकथितया सह । नानापट्टकुटीकोटीयोजनोन्नतशालिनि ॥ पद्मेस्थितं महापद्मकोटियोजनसंमितम् । बद्धपद्मासनासीनं समुपासेत्सदाशिवम् ॥

यद्वा कूटाङ्ककोटी कटकनटनटी नाट्य नव्यान्नपान
ध्याना (१) विद्यानकानीनकमितशतकोटयुन्नतैर्योजनौघैः ।
तेजोमूर्त्यन्तकन्दप्रभृतिषु दशधा सप्तधाच प्रभिन्नैः
सङ्ख्यातव्यप्रमाणे स्सरसिरुहवरे योगपीठे निषण्णम् ॥

---

१. द्विधात्मकक्रनकामितेति पाठभेदः ।

दशोत्तरप्रयुतपरार्धयोजनां विवृद्धकान्तिपयपरार्ध्ययोजनाम् ।
समुन्नतिं समुपगतं समाश्रये सदाशिवं सरसिरुहासने स्थितम् ॥
पद्मं कन्देऽथ नाळे क्रमिकदशगुणा विंशतौ तस्य वृद्धि
र्येकैकद्वित्रिषुस्या च्छतमुखदशलक्षान्तभंग्याऽथ वृद्धिः ।
ग्रंथौ कोट्याथ पद्मप्रभृतिषु दशकोट्येति संख्याभिराभिः
संख्याते योजनौघे महिमजुषि महायोगपीठे स्थितं वा ॥
तदुपरि शतकोटियोजनौघ प्रथित महेश्वरतत्वमानमूर्तैः ।
लसितमुपरि तत्सहस्रकोट्या तदयुतकोटिदिशाच वृद्धिभाजम् ॥
पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम् ।
दक्षिणे शूलवज्रासिपरश्वभयमुद्रिकाः ॥
वामेच दधतं नागपाशघण्टानलांकुशान् ।
अथवा वरखट्वाङ्गशूलाभीशक्तिपञ्चकम् ॥
रुचकं डमरुं सर्पं नीलांभोजाक्षमालिकाम् ।
अस्योर्द्ध्ववक्त्रं देवस्य बालभावमनोहरम् ॥
प्रसन्नमूर्द्ध्वाभिमुखं निर्मलं स्फटिकप्रभम् ।
पूर्ववक्त्रं महेशस्य नि(१)ष्टप्ताष्टापदप्रभम् ॥
गर्वेण स्तिमितं सौम्यं संप्राप्तनवयौवनम् ।
दक्षिणं वदनं शंभोर्नीलाञ्जनचयप्रभम् ॥
भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ।
दंष्ट्राकराळं दुर्धर्षं स्फुरिताधरपल्लवम् ॥
चन्द्रापीडज्वलत्केशं विलसत्प्रौढयौवनम् ।
उत्तरं वक्त्र मीशस्य नवविद्रुमसुप्रभम् ॥

---

१. निक्षिप्तेति पाठान्तरम् ।

ललाटतिलकोपेतं नीलकण्ठविभूषितम् ।
प्रलोभनं त्रिनयनं चन्द्राभरणभास्वरम् ॥
पार्वतीवदनाकारसलीलभ्रूलतान्वितम् ।
। पश्चिमं चण्डसङ्काशं नृपलक्षणलक्षितम् ॥
चन्द्रावतंसरुचिरं ध्यानस्तिमितलोचनम् ।
इति ध्यात्वा पुनरपि ध्यायेद्देवं सदाशिवम् ॥
इच्छाज्ञानक्रियारूपविलसल्लोचनत्रयम् ।
ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम् ॥
पञ्चब्रह्मात्मवदनं पञ्चसादाख्यवक्त्रकम् ।
श्रीमत्पञ्चाक्षराकारवदनांसोरुशोभितम् ॥
समस्ततन्त्ररूपं च वर्णब्रह्मकलामयम् ।
निवृत्या जानुपर्यन्त मानाभेश्च प्रतिष्ठया ॥
आकण्ठं विद्यया सिद्ध माललाटं तु शान्तया ।
तदूर्द्ध्व शान्त्यतीताख्यकलया परिकल्पितम् ॥
एवं पञ्चकलारूप मिदं सादाशिवं वपुः ॥
चतुर्मुखी तटिद्वर्णा निवृत्तिर्वज्रधारुणी ।
एकवक्त्रा शशाङ्काभा प्रतिष्ठा पद्मधारिणी ॥
अग्निवर्णा त्रिवदना विद्या शक्तिलसत्करा ।
कृष्णवर्णा चतुर्वक्त्रा शान्तिर्ध्वजविधारिणी ॥
पाशभृत्पञ्चवदना शान्त्यतीता शशिप्रभा ।
सर्वाः पद्माक्षमालाभ्या मभयेन विराजिताः ॥
चतुर्भुजा स्त्रिणेत्राश्च पीनोन्नतपयोधराः ।
आसां पञ्चाध्वगर्भत्वात् षडध्वात्मा सदाशिवः ॥
मन्त्राध्वाच पदाध्वाच वर्णाध्वा भुवनाध्वकः ।

तत्वाध्वा च कलाध्वा च षडध्वान इमे मताः ॥
चतुर्विंशत्युत्तरं यद्भुवनानां शतद्वयम् ।
भुवनाध्वा स सञ्चिन्त्यो रोमवृन्दात्मना विभोः ॥
पञ्चाशद्रुद्ररूपैस्तु वर्णै र्वर्णाध्वकल्पना ।
असौ त्वगात्मना चिन्त्यो देवदेवस्य शूलिनः ॥
रुधिरात्मा तु मन्त्राद्वा विचिन्त्यः पार्वतीपतेः ।
पदाध्वा चिन्तनीयस्स्यात् सिरामांसत्वषा प्रभोः ॥
पृथिव्यादीनिषट्त्रिंशत् तत्वान्यागमवेदिभिः ।
उक्तान्यमीभिस्तत्वाध्वा शुक्लमज्जास्थिरूपभृत् ॥
नास्य देहेऽस्थि रुधिरं न मांसं नास्ति किञ्चन ।
प्रतिबिंब मिवादर्शे शक्रचापमिवांबरे ॥
ज्योतिर्मयत्वया सिद्ध मिदं सादाशिवं वपुः ।
तथाऽपि कल्पनामात्रं कलावाऽप्यध्वनामिदम् ॥
ब्रह्मस्वीशेन मूर्धानं पुरुषेण चतुर्मुखीम् ।
हृदयादीन्यघोरेण गुह्यादीनि तु वामतः ॥
सद्योजातेनतु ध्यायेत् पादादीनि जगत्पतेः ।
पञ्चवक्त्राः स्मृतास्सर्वे दशदोर्दण्डभूषिताः ॥
खड्गखेडधनुर्बाणकमण्डल्वक्षसूत्रिणः ।
वराभयोपेतकरा श्शूलपङ्कजपाणयः ॥
अघोरो घोर एतेषु तदन्ये सौम्यविग्रहाः ।
एवं ध्यात्वा सदेशस्य पञ्चब्रह्मात्मतां विभोः ॥
तत्तद्ब्रह्मकलाभेदै विचिन्त्याङ्गानि कल्पयेत् ।
ईशानस्य कलाः पञ्च मूर्द्धात्मकतां गताः ॥

चतुर्मुखतया ध्येया श्चतस्रः पुरुषस्य ताः
अष्टावघोरस्य कला स्समस्ता जगतीपतेः ॥
हृत्कण्ठोऽस्सौ नाभिकुक्षी पृष्ठं वक्ष इतीरिताः ।
वामदेवस्य तु कलास्त्रयोदश शिवोदिताः ॥
गुह्योरुजानुजंघास्फिक्कटिः पार्श्वे तथा मताः ।
सद्योजातस्यतु कला वसुसंख्याः प्रकीर्तिताः ॥
पादौ करौ नासिके च शिरोबाहू च ता मताः ।
अष्टत्रिंशत्कला देवाः त्रिणेत्राश्च चतुर्मुखाः ॥
वराभयपरश्वेणविलसत्करपङ्कजाः ।
तत्तद्ब्राह्मसमाकारवर्णाद्युपभृतोऽथवा ॥
एतेषां वामभागेषु शशिन्याद्याश्च शक्तयः ।
पाशांकुशाभयवरै ध्यातव्यास्सुस्मिताननाः ॥
श्रीकण्ठप्रमुखान्रुद्रान्वर्णरूपान्सशक्तिकान् ।
प्रभोरवयवान्ध्यायेत्न्यासविन्यासवर्त्मना ॥
स्मरेत्सशक्तिकान् रुद्रा नर्धनारीश्वराकृतीन् ।
सिन्दूरकांचनप्रख्य वामदक्षिणपार्श्वकान् ॥
पाशाङ्कुशाक्षवलय वरमुद्राविराजितान् ।
प्रसन्नवक्त्रकमला न्विश्ववांछितदायकान् ॥
कामिकं पादकमलं योगजं गुल्फयो र्युगम् ।
चिन्त्यं पादांगुलीरूपं कारणं प्रसृतिद्वयम् ॥
अजितं जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः ।
गुह्यबीजात्मकं सूक्ष्मं सहस्रं भ्रुकुटीतटम् ॥
पृष्ठभागेंऽशुमानस्य नाभिश्रीसुप्रभेदकम् ।

विजयं जठरं प्राहुर्निश्वासं हृदयात्मकम् ॥
स्वायम्भुवं स्तनद्वंद्व मनलं लोचनत्रयम् ।
वीरागमः कण्ठदेशो रौरवं श्रवणद्वयम् ॥
मकुटं मकुटं तन्त्रं बाहवो विमलागमः ।
चन्द्रज्ञान मुरश्शंभो र्बिम्बं वदनपङ्कजम् ॥
जिह्वा प्रोद्गीत मीशस्य ललितं गण्डयोर्द्वयम् ।
सिद्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ॥
यज्ञोपवीतं शर्वोक्तं हारस्त्वक्पारमेश्वरम् ।
किरणं रत्नभूषास्य वातुळं वसनात्मकम् ॥
एवं तन्त्रात्मकं रूपमीश्वरस्य विचिन्तयेत् ।
शिवज्ञानप्रदं पुंसां शिवधर्मप्रवर्तकम् ॥
विशुद्ध शिवसादाख्यं विद्युद्वृन्दमिवांबरे ।
विश्वतस्फुरितज्योति र्विद्यादूर्ध्वं मुखं विभोः ॥
अमूर्ति मथ सादाख्यं मूलस्तम्भ इति श्रुतम् ।
ज्योतिस्तम्भमयं लिङ्गं स्मरेदस्योत्तरं मुखम् ॥
ज्योतिर्लिङ्गैकभागोत्थमेकवक्त्रं त्रिलोचनम् ।
मूर्तिसादाख्य मित्युक्तं ध्यायेत्पश्चिममाननम् ॥
शूलञ्च परशुं वज्र मभीतिं दाक्षिणैः करैः ।
पाशं वह्निंच घण्टांच वरं वामैः करैरपि ॥
दधानं कर्तृसादाख्यं चतुर्वक्त्रांबुजोज्वलम् ।
लिङ्गमध्ये समुद्भूतं संस्मरेद्दक्षिणाननम् ॥
पञ्चवक्त्रं दशभुजं पीठं लिङ्गे समुद्गतम् ।
प्रसिद्धं कर्तृसादाख्यं पुरारेः पूर्वमाननम् ॥

पञ्चब्रह्माण्यूर्ध्वपूर्वदक्षिणोत्तरपश्चिमान् ।
वक्त्रपद्मान्विभाव्यैयेदशानप्रभृति क्रमात् ॥
हृदयं हृदये शुभ्रं शिरश्शिरसि पिङ्गळम् ।
शिखां शिखापदे रक्तां कवचं पार्श्वयोः स्थितम् ॥
नेत्रेतु श्यामळं नेत्रं करेऽस्त्र मसितं स्मरेत् ।
चतुर्भुजास्त्रिणेत्राश्च जटामकुटमण्डिताः ॥
वराभये कपालञ्च शूलञ्च दधतं करैः ॥
अङ्गदेवाःस्मृतास्सौम्यनेत्राप्रेतूग्रविग्रहे ।
त्रिशूलास्त्रिगुणः प्राहुः परशुस्सत्यनिष्ठिताः ॥
खड्गप्रतापोवज्रश्च शंभोश्शक्तिरभेद्यता ।
वह्नेस्संहारिणी शक्तिश्शक्तिर्नागे प्रधृष्यता ॥
मलमाया कर्मपाशो घण्टानादस्वरूपिणी ।
अभयं पालिनी शक्ति र्नियमंत्वंकुशं विदुः ॥
इच्छाज्ञानक्रियारूपा स्त्रिशूलं शक्तयोमताः ।
उक्ता स्ताएव खट्वाङ्गं शुद्धतत्वप्रवर्तिकाः ॥
बीजपूरमिति प्रोक्ता जगद्बीजप्रवर्तिका ।
डमरुक्षोभसंपन्नमायातत्वप्रवर्तिका ॥
काकोदरः कला मुख्या कार्यजातप्रवर्तिका ।
मनःप्रवर्तिकाशक्तिरिन्दीवरतया मता ॥
अक्षमालातु सा ज्ञेया इन्द्रियाणां प्रवर्तिका ।
शक्त्यायुधात्मिका शक्ति र्दुष्टसंहारकारिणी ॥
वरो भोगप्रदा शक्ति रभयं मोक्षदायिका ।
इत्थं दशायुधधरं कोटिशीतांशुशीतळम् ॥

द्वात्रिंशल्लक्षणोपेतं सर्वाभरणभूषितम् ।
पञ्चत्र्यंगुळपरिच्छिन्नजटामकुटमण्डितम् ॥
तत्सव्यकोटिविन्यस्तत्र्यंगुळार्धेन्दुशेखरम् ।
तद्वामकोटिविश्रान्तबिंद्वाकृत्यमरापगम् ॥
त्रिपुण्ड्रार्धेन्दुभूयन्त्रदीपचन्द्राकृति क्रमात् ।
ईशानाद्ये मुखं पुण्ड्रान्धारयन्तमजांतिमैः ॥
ध्यायेत्तद्वामभागेतु दिव्यरूपां मनोन्मनीम् ।
जपाकुसुमसङ्काशां शुभ्रवस्त्रविभूषिताम् ॥
सर्वाभरणसंपूर्णां पीनोरुजघनस्तनीम् ।
सहस्रपद्मनीलाब्जवरदाभयधारिणीम् ॥
एवं मनोन्मनीयुक्तं साक्षाद्देवं सदाशिवम् ।
लिङ्गेऽपि भावयन्नग्रे लिङ्गबुद्धिं परित्यजेत् ॥
नेत्रत्रयेषु विन्यस्य हौं नेत्रेभ्य इति क्रमात् ।
आवाहयेत्परशिवं सदैवं हृदयांबुजे ॥

अथावाहनक्रमः— अप्रमेय मनिर्देश्य मनूपम मनामयम् । सूक्ष्मं सर्वगतं नित्यं ध्रुव मव्यय मीश्वरम् ॥ भवन्तं भवताऽऽदिष्टो मन्त्रेणाभिनमाम्यहम् ॥ इति विज्ञाप्य ऋजूर्ध्वकायो मनश्चक्षुर्निरोधनपूर्वक मिडया वायुमापूर्य कुंभकं कृत्वा हृदि पुष्पसंपूर्ण मञ्जलिं निधाय दृढमावाहनमुद्रां बद्ध्वा स्वशरीरे मूलाधारस्थितं मन्त्रमयं परमशिवं ज्योतिस्समाकृष्य मूलाधारप्रभृति स्थितं हकार मतिलंघ्य हृदयपर्यन्तं नीत्वा हृत्कण्ठताल्वादिस्थानास्थित पृथिव्यादिपाशजालब्रह्मादिकारणेश्वरसहिताकारादिद्वादशकलाश्च क्रमेण तत्तदनुसन्धानपूर्वक मातिलंघ्य द्वादशान्तपर्यन्त मुच्चारयन्नेव पुष्पाञ्जलिमपि द्वादशान्तपर्यन्तंनीत्वा मन्त्रमयं ज्योतिर्द्वादशान्तास्थितपरमशि-

वेन संयोज्य अविश्रान्तं परमामृतस्यन्दिबिन्दुरूपं ततआनीय भ्रूमध्यगत-
शिवमण्डपविश्रान्तं संभाव्य शरदिन्दुसहस्त्रवद्भाव्य हृद्देशेऽञ्जलिं धारयन्
वायुमपि पिङ्गळया विरेच्य वायुना सह परमशिवं ज्योतिः पुष्पाञ्जलिमध्य-
प्रापितं विभाव्य हां हौं शिवायनम इति सदाशिवस्य ब्रह्मरंध्रे योजयेत् ।
उक्तार्थविशदीकरणाय मूलमन्त्र तदीयहकार तत्कलाद्वादशस्थानानि प्रद-
र्श्यन्ते ॥ यद्देहमध्यस्थानं मूलाधारं ततः प्रभृति ब्रह्मरन्ध्रपर्यन्तं ताळचतुष्टय-
प्रमाणं देहान्तर्गतम्। ततऊर्द्ध्वं तालप्रमाणं शिखास्थानम्। तत्र मूलाधारस्थि
तचतुर्दळकमलकर्णिकायां प्रासादमन्त्रस्योत्थानम् । ततःप्रभृति ना-
भिपर्यन्तं मृणाळसूक्ष्मोविद्युत्प्रभो हकारः । नाभेरूर्द्ध्वं द्वादशांगुलपर्यन्तं वि-
द्युद्द्युति रकारयुक्तो हकारः । ततः पञ्चचतुरंगुलप्रमाणं हृत्पद्मम् । तत
आरभ्य शिखाग्रपर्यन्तं द्वादशकलास्थानानि । तत्रचतुरंगुल व्याप्तिमानौ-
कार स्त्रिमात्रस्समूढांगारपुञ्जद्युतिः । सच निवृत्तिकलया पृथिव्यादिप्रकृत्य-
न्तैः चतुर्विंशतितत्वैश्च सहितेन ब्रह्मणाऽधिष्ठितः । तदूर्द्ध्वं कण्ठस्थानस्थि-
ताष्टांगुलप्रमाण षोडशदळपद्मव्याप्तिमा नूकारः द्विमात्र स्समसमयसमुदि-
तचन्द्रसूर्यद्युतिः । स प्रतिष्ठाकलया पुरुषादिकालान्तैष्षड्भिस्तत्वैश्च सहि-
तेन विष्णुनाऽधिष्ठितः । तदूर्द्ध्वं तालुमूलस्थितचतुरंगुलप्रमाणचतुर्दलपद्म-
व्याप्तिमान्मकारः एकमात्रो विद्युद्वर्णः । स विद्याकलया मायातत्वेनच
सहितेन रुद्रेणाधिष्ठितः । तदूर्द्ध्वं भ्रूमध्यस्थितद्व्यंगुलप्रमाणद्विदलपद्म-
व्याप्तिमा न्बिन्दुर्वृत्ताकारोऽर्द्धमात्रो विद्युद्वर्णः शान्तिकलया शुद्धविद्येश्वरत-
त्वाभ्यांच सहितेन महेश्वरेणाधिष्ठितः । तदूर्द्ध्वं ललाटमध्ये अर्धमात्रा
ऊर्द्ध्वाग्रा अर्धचन्द्राकृतिः पादमात्रा चन्द्रवर्णा । तदूर्द्ध्वं ललाटे निरोधी ।
सचोर्ध्वाग्रत्रिकोणाकृति रष्टांशमात्रो धूम्रवर्णः । तदूर्द्ध्वं शिरसि नादः । स
दण्डाकृति रुभयतोबिन्दुद्वययुक्तः षोडशांशमात्रो माणिक्यवर्णः । ततो

ब्रह्मरन्ध्रे नादान्तः स दक्षिणामुखहलाकृतिः दक्षिणपार्श्वस्थबिन्दुयुक्तः द्वात्रिंशात्ममात्रो विद्युद्वर्णः। एवं बिन्दुस्थानात् भ्रूमध्या देकादशांगुलस्थितब्रह्मरन्ध्रपर्यन्ते स्थाने स्थिताना मर्धचद्रनिरोधि नादनादान्तानां चतुर्णामपि शान्त्यतीतकला सदाशिवतत्वाभ्यांच साहित स्सदाशिव एवाधिष्ठाता । ब्रह्मरन्ध्रादूर्द्ध्व मेकांगुलस्थानास्थिता शक्ति स्सर्वमुखहलाकृति र्वामपार्श्वस्थबिन्दुसहिता चतुष्षष्ट्यंशमात्रा । ततः त्र्यङ्गुलस्थाने स्थिता व्यापिनी त्रिशूलाकृति र्दक्षिणपार्श्वस्थबिन्दुसहिताऽष्टाविंशत्यधिकशतांशमात्रा । तदूर्द्ध्वं चतुरङ्गुलसमानबिन्दुद्वयान्तर्गतकुब्जरेखायुगलान्तरालस्समंजुरेखामधिपट्पञ्चाशदधिक द्विशततमांशमात्रा । तदूर्द्ध्वं चतुरंगुलस्थितोन्मनीबिन्द्वधिष्ठानकतदूर्ध्वप्रसृत दण्डाकाररेखात्मिका मनोमात्रा । अत्र ब्रह्मरन्ध्रादूर्द्ध्व मेकत्रिचतुरंगुलक्रमेण द्वादशांगुलपर्यन्तशिखास्थाने उपर्युपरि स्थिता श्शक्तिव्यापिनी स्समनोन्मनी श्शतकोटिसूर्यप्रभाः अनाहतशिवेनाधिष्ठिताः । ताश्च चतस्रोऽपि मिळिताः परमाकाशा उच्यन्ते । एवमकारश्चतुरंगुलः । उकारोऽष्टांगुलः । मकारश्चतुरंगुलः । बिन्दुर्द्व्यंगुल मर्धचन्द्र निरोधि नाद नादान्ता एकादशांगुळं शक्ति व्यापिनी समनोन्मना द्वादशांगुळव्याप्नुवत्येकचत्वारिंशदंगुलं द्वादशानामपि कलानां व्याप्तिस्थानम् । ततश्च मूलाधारात् द्वादशान्तपर्यन्त मुक्तमानेषु तत्तत्स्थाने हकारमकारयुक्तहकार मौकारमूकारं वृत्ताकारं बिन्दु मूर्द्ध्वाग्रार्धवृत्ताकार मर्धचन्द्र मूर्ध्वत्रिकोणाकारं निरोधिनं बिन्दुद्वयमध्यगतदण्डाकारं नाददक्षिणपार्श्वस्थित बिन्दुसहितोर्ध्वाग्र दक्षिणामुखहलाकारं नादान्तं वामपार्श्वस्थितबिन्दुसहितोर्ध्वाग्रवाममुखहलाकारां शक्तिं दक्षिणपार्श्वस्थितां बिन्दुसहितोर्ध्वाग्रत्रिशूलाकारां व्यापिनीं बिन्दुद्वयान्तरालगतकुब्जरेखाद्वयमध्यस्थितऋजुरेखाकृति समानां बिन्द्वधिष्ठानकोर्ध्वाग्रऋजुरेखाकृतिमुन्मनां च हृदया-

दिस्थानस्थितकलातत्त्वकारणेश्वरैस्सह क्रमेण पूर्वपूर्वत्यागेन झटिति मनसा विचिन्त्य तदुपरि परमाकाशसरित्समुद्भूतकोटिसूर्यसमप्रभ कोटिशीतांशुशीतळाष्टत्रिंशत्कलात्मक केसरोज्वल प्रणवकर्णिकापञ्चाक्षरबीजाढ्य परमानन्दमधुभरित मुक्तभृङ्गनिषेवित चिच्छक्तिरूप सहस्रदळकमलमध्यगतं सद्यस्समुद्यदनेककोटि शारदशशाङ्कसङ्काशप्रकाशं परमानन्दजलधिं निष्कळंपरमशिवं मनसाऽवगाहेत। एवं भावनापुरस्सरं परमशिवं मूलेनानीय हृदयमन्त्रेणावाहनमुद्रया सदाशिवहृदयांबुजंप्रापय्यास्थापनमुद्रयातस्मिंसंस्थाप्य सन्निधानमुद्रया स्वाभिमुखीकृत्य स्वागतंते महादेवेति विज्ञाप्य वत्स सुस्वागतमितिदेवेनोक्तं मनसा विभाव्य स्वागतार्घ्यं दत्वा सन्निरोधनमुद्रया सन्निरुध्य "स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम्। तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन्सन्निधौ भव"इति हृदंजलिबन्धपूर्वकं संप्रार्थ्य शिवस्यानुमतिं भावयित्वा निरोधार्घ्यं प्रदाय काळकण्ठ्या हुंफडन्तास्त्रेण विघ्नानुत्सार्य शिवं कवचेनावकुण्ठ्य हृदयशिरश्शिखाकवचानि तत्तन्मन्त्रैर्देवस्य हृदयादिस्थानेषु विन्यस्य हृदयादिकराङ्गविन्यासरूपसकळीकरणानन्तरं पुष्पमारोप्य मूलेन परमीकृत्य धेनुमुद्रयाऽमृतीकुर्यात्। अत्रावाहनं शिवस्य सदाशिवदेहप्रापणम्। स्थापनं सदाशिवस्य हृदंबुजे स्थापनम्। सन्निधापनं स्वाभिमुखीकरणम्। सन्निरोधनं यावत्पूजासमाप्ति सन्निधानप्रार्थनम्। अवकुण्ठनं भक्तेषु प्रकाशार्थं विघ्नाना मप्राप्त्यर्थं च कवचेनाच्छादनम्। सकळीकरणं हृदयादिपञ्चाङ्गन्यसनम्। परमीकरणं शुक्लपीतरक्तासितरक्तवर्णानां हृदयादीनां शिवैकत्ववर्णानुसंधानम्। अमृतीकरणं विग्रहस्य शिवस्यचाभेदेन प्रतिपत्तिः। ननु विश्वव्यापकस्य शिवस्य कथमभिमतदेशप्रापणरूप मावाहन मुच्यते। अचिन्त्याद्भुतानन्तशक्तिकस्य शिवस्यव्यापकत्वमव्यापकत्व मप्यस्तीति तच्छिवस्य देशान्तरप्रापणरूप मुपपद्यते। यद्वा—

व्यापकस्यापि जीवस्य शरीरावच्छेदोपाधिकत्वमिव शिवस्यापि मन्त्रतेजोवच्छे-दोपाधिवदभिमतदेशान्तरप्राप्तिर्नविरुध्यते । अथवा दारुणिव्याप्तस्याग्नेर्म-थनक्रियया क्वचिदभिव्यंजनवदभिमतदेशप्रापणभावनारूपया क्रियया शिव-लिङ्गाभिमतदेशे शिवस्याभिव्यञ्जनमेवावाहनम् । ननु सर्वत्र नित्योदित-चिदानन्दप्रकाशरूपस्य परमशिवस्य किमिदमभिव्यञ्जनमुच्यते । यथा स्वयंप्रकाशमानस्याप्यंगारवह्निपुञ्जस्य भस्मच्छन्नस्य भस्मनिरासकफूत्कार-क्रिययाऽभिव्यञ्जनं एवं स्वयंप्रकाशमानस्यापि परमशिवस्य पूजकमनसो-विषयान्तरेषु मनोव्यापारेण तं प्रति च्छन्नस्यानन्यमनस्कविहितावाहनक्रि-यापूर्वक मभिमतदेशे लिङ्गादौ यावद्विसर्जनं कर्तव्यस्य तत्तदुपचारसमर्प-णार्थ मनुसन्धानसन्तानस्योक्रमण मेवाभिव्यञ्जनम् । अथवा शिवपुरा-णोक्तप्रकारेण सदाशिवहृदयांबुजे पराशिवस्योमासहायचिदानन्दमयदिव्य-विग्रहाविर्भावमेवावाहनम् ॥ तत्प्रकारः प्रदर्श्यते ॥

लिङ्गे सदाशिवं ध्यात्वा निश्चलेनान्तरात्मना ।
अष्टत्रिंशत्कलान्यासं कृत्वा स्वस्यां तनौ यथा ॥
अभ्यर्च्य गन्धपुष्पाद्यैः स्यक्त्वा लिङ्गात्मतामतिम् ।
तस्या मूर्तौ मूर्तिमन्तं शिवं परमकारणम् ।
प्राणस्थानं सदेशस्य चिन्तयेदंबया सह ॥
ब्रह्मा विष्णुश्च रुद्रश्च तथाऽन्ये च सुरासुराः ।
तपोभिर्हठैस्तथापि यस्य दर्शनकांक्षिणः ॥
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ।
सह भूतेन्द्रियैस्सर्वैः प्रथमं संप्रसूयते ॥
कारणानां च यो धाता ध्याता परमकारणम् ।
[illegible] ॥

सर्वैश्वर्येण संपूर्णो नाम्ना सर्वेश्वरस्स्वयम् ।
सर्वैर्मुमुक्षुभिर्ध्येय श्शंभुराकाशमध्यगः ॥
सर्वोपरि कृतावास स्सर्ववासश्च शाश्वतः ।
षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः ॥
उत्तरोत्तरभूताना मुत्तरश्च निरुत्तरः ।
अनन्तमहिमांभोधि रपरिच्छिन्नवैभवः ॥
अशेषविषयामोघशुद्धबुद्धिविजृंभणः ।
आत्मशक्त्यमृतास्वादप्रमोदभरलालसः ॥
अनन्तानन्दसन्दोहमकरन्दमधुव्रतः ।
अखण्डजगदण्डानां पिण्डीकरणपंण्डितः ॥
औदार्यवीर्यगांभीर्यमाधुर्यमकरालयः ।
अतुलस्सर्वभूतानां राजराजो महेश्वरः ॥
अप्राकृतशरीरं त मतिमन्मथरूपिणम् ।
घृतरीतिघनीभूतसच्चिदानन्दविग्रहम् ॥
सर्वलक्षणसंपन्नं सर्वावयवशोभनम् ।
रक्तास्यपाणिचरणं कुन्दमन्दस्मिताननम् ॥
शुद्धस्फटिकसङ्काशं फुल्लपद्मत्रिलोचनम् ।
चतुर्भुजमुदाराङ्गं चारुचन्द्रकलाधरम् ॥
वरदाभयहस्तंच मृगटंकधरं हरम् ।
सर्वोपमानवर्गस्य दवीयांसं विभावयेत् ॥
ततस्संचिन्तयेत्तस्य वामभागे महेश्वरीम् ।
उत्फुल्लोत्पलपत्राभविस्तीर्णायतलोचनाम् ॥

पूर्णचन्द्राभवदनां नीलकुञ्चितमूर्द्धजाम् ।
नीलोत्पलदळप्रख्यां चन्द्रार्धकृतशेखराम् ॥
अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् ।
तनुमध्यां पृथुश्रोणिं पीतसूक्ष्मतरांबराम् ॥
सर्वाभरणसंपन्नां माणिक्यतिलकोज्वलाम् ।
विचित्रपुष्पसंकीर्णकेशपाशमनोहराम् ॥
सर्वतोनुगुणाकारां किंचिल्लज्जानताननाम् ।
हेमारविन्दं विकसद्दधानां दक्षिणे करे ॥
दण्डवच्चापरं हस्तं न्यस्यासीनां सहासने ।
भुक्तिमुक्तिप्रदां देवीं सच्चिदानन्दरूपिणीम् ॥
सदाशिवेश्वरहरश्रीशद्रुहिणमातरम् ।
समस्तगौरीलक्ष्म्यादिशक्तिचक्रस्य नायिकाम् ॥
एवं देवंच देवीं च विचिन्त्य हृष्टहायनौ ।
भक्त्योपचारवर्गेण क्रमेण परिपूजयेत् ॥

एवं सदाशिवस्य हृदयांबुजे सांबशिवविग्रहाविर्भावभावनापक्षे तस्य सदाशिवहृदयांबुजे अवस्थापनं स्वाभिमुखीकरणम् । इत्यादि सर्वमुपपद्यतेतराम् । शरीरशरीरिणोरभेदप्रातिपत्तिरूप ममृतीकरणं तु सांबशिवविग्रहाविर्भावपक्ष एवोपपद्यते । स्वाभिमते लिङ्गादावावाहिते सदाशिवविग्रहे पूजार्थमभिव्यक्तिं प्रार्थयमानस्य पूजकस्यानुग्रहार्थं शिवाभिन्नसच्चिदानन्द एवाचिन्त्याद्भुततदीयशक्तिमहिम्ना करकमौक्तिकाद्याकारेण जलबिन्दुरिव सकलावयवसंपूर्णसांबशिवविग्रहाकारेणाभिव्यज्यत इति शिवपुराणादिमर्यादा । एवं चिदानन्दाकारपरमशिवविग्रहप्रभाधवळितरूपादेव नानावर्णाष्टत्रिंशत्कलामयस्यापि सदाशिवविग्रहस्य स्फटिकवर्णत्वभावनोपपद्यते ।

सदाशिवस्य तत्पुरुषादिवक्त्राणां पीतनीलसितारुणवर्णत्वं तु पूर्वादिदिक्पतीनामिन्द्रयमवरुणकुबेराणां तत्तत्कार्योपयोगिपीतनीलसितारुणवर्णस्थिरीकरणार्थं तत्तद्वर्णानुकरणप्रयुक्तम् । एवंरूपे परमशिवस्यावाहने क्रियमाणे ऊर्ध्वाभिमुखस्य सदाशिवेशानवक्त्रस्य तत्पुरुषवक्त्रवदाविसर्जनं प्राङ्मुखत्वं भावनीयम् । आवाहनाद्यमृतीकरणान्तसंस्कारं सांबसदाशिवविग्रहाभिव्यक्तिपक्षे सदाशिवमूर्तिमध्य एव कर्तव्यम् । तत्रैव परमशिवस्यांबिकायाश्च प्रत्येकं पदार्थानुसमयक्रमेण पाद्याद्युपचाराश्च कर्तव्याः । सदाशिवमूर्तौ परमशिवचैतन्यमात्रावाहनपक्षे तदावाहनानन्तरं पाद्यादि । मनोन्मनीमूर्तौ अंबिकां चावाहनादिभिस्संस्कृत्य पाद्याद्युपचारैः पूजयेत् ॥

## पाद्यादिप्रकारः ॥

वामहस्तेन सत्रिपदीकं पाद्याचमनार्घ्यपात्रमुत्क्षिप्य पाद्यमीश्वरतत्त्वान्तमाचमनं सदाशिवतत्त्वान्त मर्घ्यं शिवतत्त्वान्तश्च विभाव्य पाद्यादिकं पूजकस्येश्वरसदाशिवतत्त्वप्रापकंच ध्यात्वा मूलाधारा दुत्थितं प्रासादादिमन्त्रं पाद्यादिक्रमेण मूलब्रह्मरन्ध्रद्वादशान्तपर्यन्त मुच्चरन्तं विभावयन् हां हौं शिवायेति मन्त्रक्रमेण नमस्स्वाहास्वधान्तमुच्चारयन्सद्योजातादिक्रमेण सपुष्पेणोत्तानेन दक्षिणकरांगुष्ठमध्यमानामिकाग्रेण श्रीपादयोस्सव्यवामक्रमेण पाद्यं मुखेषु तत्पुरुषादिक्रमेणाचमनं मूर्धस्वीशानादिक्रमेणार्घ्यं च दद्यात् । सुगन्धि पुष्पं ज्ञानमयं शिवसायुज्यहेतुंच ध्यात्वा मन्त्रं द्वादशान्तोपरिस्थितशिवपर्यन्तमुच्चरन्तं विभाव्य वौषडन्तमन्त्रेण मूर्द्धस्वीशानादिक्रमेण निवेदयेत् । अंबिकाया अपि पाद्यादिकं तत्तत्रैव समये पदार्थानुसमयेन दद्यात् । एवं गन्धादिष्वपि द्रष्टव्यम् । तत्र शिवायैनम शिवायै स्वधेत्यादयो मन्त्रा इति विशेषः । ततः स्वाहान्तमूलेन

धूपदीपौ पूर्वोक्तप्रकारेणाचमनार्घ्येच शिवाभ्यां दत्वा अस्त्रमन्त्रेणापि वस्त्रेण पिण्डिकाधोभागं वामहस्तेन स्पृशन्नेव दक्षिणहस्तेन पुष्पं गृहीत्वा तेन पुष्पेण पूर्वार्चित मपोह्य तत्पुरुषंच विसृज्य पूर्वोक्तप्रकारेणाभ्यङ्गादिकं सर्वं मनसा विभाव्य हां शिवतत्त्वायनम इति अर्घ्योदकबिन्दुना संस्नाप्य पूर्ववत्पाद्याचमनार्घ्याणि दत्वा स्वाहान्तमूलेन वस्त्रद्वय मुपवीतद्वयं च साचमनं दत्वा हामात्मतत्वाधिपतये शिवायनमः । हां विद्यातत्वाधिपतये शिवाय नमः । हां शिवतत्वाधिपतये शिवायनमः इति पुष्पाञ्जलित्रयं शिवायै नम इति देव्यै पुष्पाञ्जलिश्च कृत्वा संभावितैर्मनसा विभावितैश्च हेमांबरकटकमकुटकर्णिकाङ्गदकेयुरादिभि राभरणैर्नमोन्तमूलमन्त्राभ्या मलङ्कृत्य गन्धपुष्पाणि समर्पयेत् । तत्र गन्धं हिमजलघृष्टसमभागगोरोचनाकुङ्कुमचन्दनैलाकर्पूरकृष्णागरुदारुकुष्ठकस्तूरिकाक्षोदोवा। समभागचन्दनागरुकर्पूरकुंकुमपत्रजलोशीरक्षोदोवा। समभागेनतदर्धेन तदर्धेनवा कर्पूरेणयुक्तचन्दनागरुकुष्ठकुंकुमक्षोदोवा । समभागचन्दनागरुकर्पूरकुकुमक्षोदोवा । समभागचन्दनकर्पूरमृगमदकुकुंमक्षोदोवा । फलस्य निष्कप्रमाणांशेन यथासंभवमात्रेण कर्पूरादियुक्तचन्दनक्षोदोवा । केवलचन्दनक्षोदोवा । केवलबिल्वखण्डक्षोदोवा । केवलकृतमालखण्डक्षोदोवा । सर्व एव गन्धाश्शिवस्यातिप्रियकराः । केवलजलघृष्टकेवलदेवदारुगन्धोऽपि कल्पपर्यन्तं शिवलोकप्राप्तिकरः । केवलबिल्वखण्डोऽपि अत्र महदैश्वर्यप्रदाय परत्र शिवप्राप्तिकरः । केवलकृतमालगन्धोऽपि दीर्घमायुः प्रदाय परत्र गाणापत्यप्राप्तिकरः । एवंभूताश्चन्दनगन्धाः फलतोद्विगुणाः । शुक्लागरुश्चन्दनात् षट्गुणः । ततः कृष्णागुरुर्द्विगुणः । तस्माच्चतुर्गुणं कुंकुमम् । तत्र प्राग्गणितप्रकारेण कर्पूरादियोगेन भूयान्विशेषः । एवंभूतेषु गन्धेषु संपन्न [illegible] निधाय देवस्यानुलेपनोचितानि ललाटा-

दीन्यङ्गानि भावयन् लिङ्गपीठिकापर्याप्तं लिङ्गपर्याप्तं यथालब्धंवा गन्धं हृदयमन्त्रेण समर्पयेत्। ततो विंशत्यंगुळविस्तारे अष्टांगुळोत्सेधे अष्टांगळोत्सेधविस्तारपादे पार्श्वद्वयगताष्टांगुळनाळे नाळपादरहितपिधानसंयुते तदर्धप्रमाणेवा सुवर्णादिमये पत्रादिरचिते वा पात्रे निहिते मुकुळपतितशीर्णाघ्रातसजन्तुकाङ्गसंस्पृष्टलूतातन्तुवेष्टित पर्युषितवस्त्रसमाहृतत्वादिदोषरहितैस्सम्यक्शोभितैः मोचितवृन्तैः प्रशस्तपुष्पैः मूलमन्त्रेण मृगमुद्रयाऽर्चयेत् । प्रशस्तानिच पुष्पाणि द्रोणबत्पुन्नागमंदारनन्द्यावर्त श्रियावर्तकरवीरार्कबकुळ कुरवकलोध्रशतपत्र धुत्तूरपलाशपाटल चंपककृतमालकर्णिकार मुनिमातुळिङ्गार्जुन प्रियंगुदेवदारु तमालाग्निगन्ध मरुवकाशोकभद्रापराजिता कतलकल्हार रक्तोत्पलनीलोत्पल कुसुम्भकुंकुम गिरिपुष्पकुशापामार्गभृङ्गराजपूगसरळकोविदार कदम्बाम्रमधूक जम्बूहेमाकुलिगुञ्जामुसलीवेजिकाजाजी मल्लिकापट्टिकामालती लक्ष्मीनिर्गुण्डीविष्णुक्रांतिकदळीशारिबादेवताळी द्विकण्ठी ग्रन्थिपर्णी प्रभृतीनि । एतेषु शुभ्रवर्णानि पुष्पाणि सात्विकानि मुक्तिप्रदानि । अरुणवर्णानि राजसानि भोगप्रदानि । पीतवर्णानि मिश्राण्युभयप्रदानि सर्वकार्यसिद्धिकराणि पुत्रपौत्रवृद्धिकराणिच । कृष्णवर्णानि नीलोत्पलव्यतिरिक्तानि तामसानि वर्जनीयानि । तान्यप्यतसीकूरंड विष्णुक्रान्तादीनि विशेषविहितानि पुष्टिप्रदानि । तत्र सर्ववर्णानि पुष्पाणि समाहृत्याभ्यर्चन मुत्तमम् । कृष्णवर्णैर्विना मध्यमम् । सितरक्तादिभिर्वर्णै रेकवर्णैश्च पुष्पैरर्चन मुत्तरोत्तरं कनिष्ठम् । मालिकास्तु प्रत्येक मेकैककवर्णैः पुष्पैर्निर्मिताः श्रेष्ठाः । अनेकवर्णपुष्पनिर्मिता मध्यमाः । पत्रपुष्पनिर्मिताः कनिष्ठाः । अर्क करवीरपुष्प बिल्वपत्र गन्धपत्रिका पुण्डरीक शतपत्र सहस्रपत्र बक धुत्तूर द्रोणापामार्ग कुश शमी कृतमाल शङ्ख व्याघ्री सदाभद्रा कृष्णानि निर्गुण्डी

बृहती श्वेतार्कः बृहद्द्रोण नीलोत्पलान्युत्तरोत्तरं सहस्रगुणफलानि । तत्रा-र्कपुष्पं दशसुवर्णदानतुल्यम् । नीलोत्पलं सहस्र सुवर्णपुष्पार्चनतुल्यम्। तुळसी कृष्णतुळसीद्रवल्ली विष्णुक्रांती श्यामा प्रियंगुनृपपुण्ड्रपुष्पादीनि अर्कसमानानि । नन्द्यावर्तविजयशतपत्र मन्दार चूतमधुक श्वेतगिरिकर्णी-मालती कदळी शारिबादिपुष्पाणि करवीरसमानि । लक्ष्मी सहदेवी नागदं-ति चंपकादीनि बिल्वपत्रसमानि । पाटलवकुळादीनि पद्मसमानि । जा-ति मल्लिका मधूर शङ्खनाग सूर्यावर्त सिंहकेसर महाभद्रादिपुष्पाण्यपामार्ग-समानि । जपा कदम्ब पुन्नाग पुष्पादीनि द्रोणसमानि । अशोक-श्वेतमन्दारपुष्पाणि यवगोधूम नीवार शालिवेणु तिलक मुद्ग निष्पावोशीर-माषांकुराणि सप्तदिनप्रवृद्धानिच कृतमालपुष्पसमानि । वज्रपद्मराग म-रकतमौक्तिकेन्द्रनील महानील सूर्यकान्तेन्दुकान्तानि पुष्पाणि सहस्रसुव-र्णपुष्पाणि करवीरनीलोत्पलसमानि । नीलोत्पलं सर्वोत्तममिति सर्वा-गमसिद्धम् । क्वचिदागमे करवीर मन्यत्र बकपुष्पमपरत्र गिरिपुष्पं सर्वोत्तर मित्युक्तम् । पद्मं सर्वोत्तममिति केचित् । कालविशेषेण पुष्पविशेषप्राश-स्त्यम् । यथा—कदम्ब चम्पक कल्हार पुन्नाग कुश बृहती पुष्पाणि वस-न्तऋतौ शिवपूजाया मश्वमेधफलप्रदानि । ग्रीष्मे पाटली मल्लिका शतप-त्रपुष्पाणि अग्निष्टोमतुल्यानि । प्रावृषि कमल मल्लिकापुष्पाण्यश्वमेधसदृशा-नि । शरदि धुत्तूर कल्हार सुजात नीलोत्पलानि सत्रयागफलप्रदानि । हेमन्ते करवीर सुजातनीलोत्पलानि शतक्रतुसमानि । शिशिरे कर्णिका-रपुष्पं सर्वक्रतुफलप्रदम् । तथा ज्येष्ठादिषु द्वादशसु मासेषु अर्कबिल्वापा-मार्ग द्रोणनीलोत्पल पङ्कजकृतमाल बृहती व्याघ्र शमी चम्पक पाटली पु-ष्पाणि प्रशस्ततमानि । तथा नन्द्यावर्त श्रियावर्तश्वेतार्क श्वेतकमल प-लाश पुन्नाग मालती पट्टिकारक्तागस्त्य वकुळ लक्ष्मी द्विकण्ठी वेजिका-पाटल पलाशाशोक कदळी शंखिनी पुष्पाणि प्रातःकालपूजायां प्रशस्तत-

मात्रि । द्रोणकरवीर कृतमाल धुत्तूर व्याघ्री बृहती पाटलकमलोत्पल चंप-
ककुरण्डपुष्पाणि मध्याह्नपूजायां । चम्पकधुत्तूरमालतीमाह्लिकावैजिकबलक-
र्णिसहभद्रा भद्रामसल्यतसीशमीशंखपुष्पाणि गन्धपत्रञ्च सायङ्कालपूजायां ।
जाती नीलोत्पलकनककदम्ब स्थलकमल केतकपूग पुन्नाग दन्ति ह्रीबेरं
बिल्वपत्रं चार्धरात्रपूजायाम् । कदम्बकनक जातीपुष्पाणि रात्रावेवसमर्प-
णीयानि । माधव्यानन्दयूथिका मदयंतिका शिरीषसर्ज बन्धूक विहित कु-
मुद डाडिम लाङ्गली श्रीपर्णी कार्पास निम्ब कूश्माण्ड शल्मली शिन्दित-
चोट गिरिचट मत्स्याक्षि कपित्थतितृणी पुष्पादीनि वर्जनीयानि । केतकीनिषे
धोऽर्धरात्रव्यतिरिक्तविषयः । कदम्बनिषेधो दिवाविषयः । गिरिकर्णि-
कानिषेधोनीलगिरिकर्णिकाविषयः । किंशुकनिषेधः कण्टककिंशुकविषयः।
एवं जपाबकुळादीनामपि क्वचिद्विहितानामागमान्तरे निषेधस्य फलभेदानु-
सारिणा पूजाभेदेनवा तत्तत्पूर्वाचारप्राप्ततत्तदागमानुसारिपूजाभेदेनवा पू-
जनीयमूर्तिभेदेन वा व्यवस्था द्रष्टव्या । निषिद्धान्यपि पुष्पाणि मण्टपालं-
कारादिषु ग्राह्याणि । पत्रेषु बिल्वतुळसी कृष्णतुळसी दर्भ दूर्वापामार्ग करवीर
नन्द्यावर्त शमीसहा धातकी विष्णुक्रान्ति भद्रा महाभद्रा जातीजम्बुकबदरोदुं-
बर चूत पलाश मुनिद्वय टङ्कोलकोरंड गिरिकर्णीद्वय रुद्रवर्णी भूपत्म ह्री-
बेर मदनमरुवकद्रोणद्वय सिन्दुवार शंखिनी गोक्षुर वकुळ कृतमालादिप-
त्राणि प्रशस्तानि । पुष्पेषु नीलोत्पलमत्पत्रेषु बिल्वपत्रं प्रशस्ततमम् । तुळ-
सीद्वयं प्रशस्ततरम् । येषां पुष्पाणि प्रशस्तानि तेषां पत्राण्यपि प्रशस्ता-
न्येव । पद्म नीलोत्पल कुटज चंपक जाति करवीर नन्द्यावर्त श्रियावर्त-
बिल्व बृहतीद्वय पाटलीपुष्प बिल्वपञ्चक तुळसीद्वय दूर्वागस्त्य गन्धपत्रा-
कारं शिवंपुष्पपत्रेषु स्वाभिमतं यत्किंचित्तत्पुष्पाकारं वा सौवर्णपुष्पं प-
त्रञ्चातिप्रशस्तम् । अञ्जलिपूरकं सुवर्णपुष्पैर्विद्यादेहाशिरावाहनं अष्टोत्तरश-

तेन एकाशील्या पञ्चाशता पञ्चविंशत्या वा सुवर्णपुष्पैः प्रतिदिनमर्चनं चासङ्ख्येयफलदम् । सुवर्णपुष्पसंपादनाशक्तौ सुवर्णशकलैर्वा रजतपुष्पैर्वाऽर्चनीयम् । सुवर्णपुष्पस्य नास्ति निर्माल्यदोषः। वत्सरादूर्ध्वं तन्निर्माल्यम् । वत्सरादूर्ध्वमपि पञ्चगव्येन संशोध्य पुनरर्चनीयम् । एवं नीलोत्पल पलाश बक करवीर गिरिपुष्प बिल्वपत्र तुळसीनामपि नास्ति निर्माल्यत्वम् । पुष्पाणि पत्राणि च स्वारामसम्भवान्युत्तमानि । वन्यानि कृतानि परारामोद्भवानि पूजाकाले याचितानि पुष्पाणि उत्तरोत्तरमपकृष्टानि । देवारामोद्भवानि तु वर्जनीयान्येव । पुष्पालाभे यानि पुष्पाणि शिवार्हाणि तेषांपत्रैरेवार्चनीयम् । पत्राणामप्यलाभे तेषां फलैरर्चनीयम् । फलेषु च बीजपूर जंबीर कदळी डाडिमादीन्यर्चनाया मतिप्रशस्तानि । फलाना मप्यलाभे तिलतण्डुल सिद्धार्थै रर्चनीयम् । कृष्णतिलैश्शिवार्चनं सकलपातकहरम् । एवं मूलमन्त्रेण पुष्पादिभिरभ्यर्च्य हां शिवासनाय नमः । हां हं हां शिवमूर्तये नमः । हां हौं शिवाय नमः। हों ईशानमूर्ध्नेनमः । हें तत्पुरुषवक्त्रायनमः। हुं अघोरहृदयायनमः । हिं वामदेवगुह्याय नमः। हं सद्योजातमूर्तये नमः। इत्यासनमूर्ति मूलैः पञ्चब्रह्मभिश्चाष्टपुष्पिकयाऽभ्यर्च्य हां हृदयायनमः । इत्यादिभि रंगैरभ्यर्चयेत् । ततो नाम्नां सहस्रेण शतेनवाऽर्चयेत् । तदवसराभावे शर्वाय क्षितिमूर्तयेनमः । भवाय जलमूर्तये नमः । रुद्राय तेजोमूर्तयेनमः । उग्राय वायुमूर्तये नमः । भीमाय अकाशमूर्तये नमः । पशुपतये यजमानमूर्तये नमः । ईशानायसूर्यमूर्तयेनमः । महादेवाय सोममूर्तये नमः । शिवाय नमः । महेश्वराय नमः । रुद्राय नमः । विष्णवे नमः । पितामहाय नमः । संसारवैद्याय नमः । सर्वज्ञाय नमः । परमात्मने नमः । इति नामाष्टकेन वाऽर्चयेत् । प्रभवेनमः । शंभवेनमः । उमापतये नमः इति नामत्रयेण वाऽर्चयेत्। नमोनीलकण्ठायनम इति नाम्ने-

केनाभ्यर्च्य यथासंभवं पुष्पमालिकाभि रलंकुर्यात् । मालिकाश्च शतादिसुवर्णपुष्परचिताः सहस्रादिनीलोत्पलरचिताः करवीरसिताम्भोज विजयासित-पाटल पुन्नाग श्वेतमन्दार नागकेसर चंपकरचिताश्च प्रशस्ताः । ताश्च विचित्रपुष्पांतररचितमालिकाश्च उमाधारपार्श्वयो स्समृद्धा बद्धव्याः । लिङ्ग-मौळौ हस्तेमणिसुवर्णनिर्मितं पुष्पनिर्मितं वा एकद्वित्रिचतुरभूमिक मिंडाख्यं प्रवृत्तदाम समर्पणीयम् । एवं पुष्पोपचारानन्तरं धूपदीपोपचारः ॥

तत्प्रकारः— सुवर्णरजतताम्रारकूटान्यतमनिर्मितं चतुरंगुळायतं तदर्धमानोत्सेध मष्टांगुळोष्ठं पश्चाद्भागे पद्मदळाङ्कित द्व्यंगुळकण्ठ द्व्यंगुळोन्नत सुवृत्तखुराकारपादं द्व्यंगुळानाहेन पूर्वोक्तलक्षणपादयुक्तेन वक्त्र-नाळेन समन्वितं अनेकसुषिरेणैकसुषिरेण वा कमलमुकुळाकृतिना पिधा-नेनान्वितं धूपपात्रं निर्मलेनांगारवह्निनाऽऽपूर्य तस्मिन्धूपद्रव्यं निक्षिप्य धूप-पात्रंपिधाय निरीक्षणादिभिस्संस्कृत्य गन्धपुष्पैरभ्यर्च्य धूपमुद्रां प्रदर्श्य धूपपात्रं दक्षिणहस्तेनादाय वामहस्ते शुद्धकांस्यनिर्मितां चतुःपञ्चषडंगुला-न्यतमोत्सेधां तावदायामां तावन्मानजिह्वां तत्त्रिगुणानाहा मर्धांगुळोष्ठा मुपपट्टिकायुक्ता मेकांगुलद्व्यंगुल सार्धद्व्यंगुळशिखरा मर्धांगुलकण्ठां त्र्यंगुलानाहां त्रिचतुःपञ्चषडंगुलदैर्घ्यनाळा मुपरिशूलपद्मवृषभशङ्खचक्रा-न्यतमचिह्नयुक्तां घण्टां घोषयन्नेव देवस्य घ्राणसमीपे ओं हां हौंशिवाय धूपं स्वाहेति धूपं प्रदर्श्य तदुपरि धूपपात्र मुद्धृत्य तद्भ्रामयन्नेव किरीटे बिन्दु-द्वयान्वितपार्श्वदण्डाकारं नादं मुखवृत्ते बिन्दुदेहे हकारं बाह्वो रौकारं पादयोरूकारं च धूपपात्रभ्रमणेन भावयेत् ॥

धूपद्रव्यम्—कर्पूरागरु चन्दनतक्कोलजातिफल लवङ्गसिल्हक मांसीमुस्तापत्रचूर्णं यक्षकर्दमाख्यम् । चन्दनागरु कर्पूरैला लवङ्ग त्वक्पत्र-पुष्प सिल्हक जटामांसीचूर्णं प्राजापत्यनामकम् । चन्दनागरु कर्पूर

कस्तूरी लवङ्गत्वक्सिल्हक सिता मुस्ताचूर्णं विजयाख्यम् । कर्पूर कृष्णागरुह्रीबेर कुंकुमकुन्दुरुतुरुष्कबिसचन्दनचूर्णं क्रमादेकद्वित्रिचतुःपञ्चषट्सप्तभागमधुमिश्रं शीतांशुनामकम् । चन्दनागरु कर्पूरसिल्हक सर्जरसकुष्ठ मुस्ताचूर्णं कल्याणनामकम् । चन्दनागरु कस्तूरी मुस्तासिल्हक चूर्णममृताख्यम् । तक्कोल पूगकर्पूरजातीफल लवङ्ग चूर्णं सुगन्धाख्यम् । एवमादीनि पृथक्पृथङ्नाम्ना प्रसिद्धानि धूपद्रव्याणि । इत्थं चन्दनागरु कर्पूर कुष्ठ गुग्गुळुचूर्णं घृतमधुयुक्तं चन्दनागरुकर्पूरकुष्ठचूर्णं शर्कराघृतमधुयुक्तं कर्पूरागरुचन्दननिर्यासचूर्णं कुंकुमा देकचतुष्षट्सप्तभागमगरुनिर्यासचन्दनचूर्णं क्रमादेकद्वित्रिचतुर्गुण मीपत्कर्पूरमिश्रितं मधुयुक्तमगरुचन्दनोशीरचूर्णं मधुयुक्तं कुष्ठचन्दनचूर्णं घृतयुक्तं गुळबिल्वपत्रचूर्णं गुग्गुळुचूर्णंघृतयुक्तं केवलमेव वा गुग्गुळुनिर्यासचन्दनागरुसौगन्धिकान्यतमचूर्णं च धूपद्रव्यमिति ॥ तत्र केवलगुग्गुलुधूपः सप्तजन्मकृतपापहरः । चन्दनधूपस्सर्वपापहरः । सौगन्धिकधूपस्सर्वकार्यार्थसाधकः। कृष्णागरुधूपस्सर्वपापहरः । श्वेतागरुधूपो मुक्तिप्रदः । लाक्षाकस्तूरीधूपः चतुर्वेदाध्यायिसद्ब्राह्मणजन्मप्रदः । घृतामिश्रगुग्गुलुधूपोमासार्धसमर्पितः कल्पकोटिसहस्रपर्यन्तं शिवपुरभोगस्य सार्वभौमजन्मलप्रापकः । द्विसहस्रफलंमहिषाक्ष गग्गुळुधूपः तालवृक्षचूर्णेन सहितः शिवसायुज्यप्रदायकः। ईशानादिमुखपञ्चके क्रमात् शीतारि कृष्णागरु शुक्लागरु सौगन्धिक गुग्गुलुधूपाः प्रशस्ताः ॥

एवं धूपोपचारानन्तरं दीपोपचारः—तस्य पात्रं धूपपात्रोक्तपादनाळसहितं त्र्यंगुळप्रमाणं गजोष्ठाकारश्च । वर्तिका कर्पूरमयीवस्त्रखण्डमयी तंतुखण्डमयी कार्पासमयीवा चतुरंगुळदीर्घा चतुस्त्रिद्व्येकांगुळज्वालानुगुणपरिणाहा कार्या । वस्त्रखण्डादिमयी चेत् उत्तमादिक्रमेण सति

संभवे कर्पूरागरुचन्दनचूर्णादिगर्भा कार्या । तत्र च कपिलाघृतमुत्तमम् । गवांतरघृतं मध्यमम् । अजाघृतं तिलतैलमधमम् । उष्ट्रमहिष्यादिघृतं वृक्षबीजादिभवं च वर्जनीयम् । यद्वा—गोघृतमात्रमुत्तमम् । अजाघृतं महिषीघृतं च मध्यमम् । पूतिगन्धनिंबकरंजैरंडादितैलं वर्जनीयम् । तैलमात्रमधमम् । एवमुक्तलक्षणपात्रविहितवर्त्यारोपितं दीपं निरीक्षणादिभिस्संस्कृत्य पुष्पैरभ्यर्च्य दीपमुद्रां प्रदर्श्य दीपमुद्धृत्य घण्टां घोषयन्नेव हां हौं शिवाय दीपं स्वाहेति नेत्रेषु प्रदर्श्य धूपपात्रवत् किरीटादिपादान्तं तद्वर्णविन्यासभावनया दीपपात्रं भ्रमयेत् । ततश्शिवायाचमनीय मर्घ्यंच दत्वा देवं सन्तुष्टं ध्यात्वा भगवन्नाज्ञां देहि भोगांगानि पूजयामीति विज्ञाप्य आवरणपूजां कुर्यात् ॥ **अथ आवरणार्चनम् ॥**

पञ्चब्रह्मषडङ्गैश्च प्रथमावरणम् । विद्येश्वरैर्द्वितीयम् । गणेश्वरैस्तृतीयम् । लोकपालैश्चतुर्थम् । तदायुधैः पञ्चमम् । एतानि पञ्चावरणानि शिवासनपद्मस्य कर्णिकायां शिवमभ्यर्च्य तस्यदळमूलेषु दळमध्येषु दळमध्याग्रयो र्मध्येषु दळाग्रेषु तदधोभागेषुच पूजयेत् । यद्वा— शिवासनपद्मदळमूलरूपेषु लिङ्गमूलभागेषु तद्दळाग्ररूपेषु पीठोपरिदेशाग्रभागेषु पीठकण्टे पीठपादे ब्रह्मशिलास्थानीये पद्मपीठे चार्चयेत् । होमीशानमूर्ध्ने नमः । स्फटिकवर्णं त्रिशूलाभयपाणि मुमासहित मीशानं पूजयामि । हें तत्पुरुषवक्त्राय नमः । कनकवर्णं पीतांबरोपवीतं मातुळङ्गाक्षसूत्रधारिणं गौरीसहितं तत्पुरुषं पूजयामि । हुं अघोरहृदयाय नमः । मेघवर्णं बभ्रुश्मश्रुशिरोरुहं दंष्ट्राकराळवदनं सर्पवृश्चिककपालमालाभरणं खट्वांग कपालखेटक पाशान्वितवामकरचतुष्टयं त्रिशूलपरशुखड्गदण्डान्वितदक्षिणकरचतुष्टयं गङ्गासहित मघोरं पूजयामि । हिं वामदेवगुह्याय नमः । अरुण मरुणवस्त्रमाल्योपवीतं खड्गखेटधरं गणांबिकासहितं वामदेवं पू-

जयामि । हं सद्योजातमूर्तये नमः । धवळवर्णं धवळस्रग्गन्धभूषणोष्णीषांबरधरं वराभयकर मंबिकासहितं सद्योजातं पूजयामि इति क्रमादीशानेंद्रयमकुबेरवरुणादि दिक्ष्वीशानादितत्तत्पूजावेळायां ऊर्ध्ववक्त्रहृदयगुह्यपादरूप तत्तत्स्थान मंकुशमुद्रयाकृष्य दीपात्प्रवर्तितप्रदीपरीत्याऽभिन्नान्भावयित्वाऽर्चयेत् । ईशानाद्याः पञ्चापि शूलटङ्काभयमनोहरकरचतुष्टया वा ध्यातव्याः । एवमागमान्तरप्रसिद्धान्यपि तेषां ध्यानानि द्रष्टव्यानि । हां हृदयायनमः । हिं शिरसे नमः । हुं शिखायै नमः । हैं कवचायनमः । हौं नेत्रत्रयायनमः । हः अस्त्राय नमः । इति चन्द्र चामीकर सिन्दूर भृङ्ग विद्युदग्निवर्णान् पद्मासनस्था नर्धेन्दुजटामकुटधारिण श्चतुर्वक्त्रान् प्रतिवक्त्रं त्रिलोचनान् कपालशूलवरदाभयहस्तान् वामिनी नीलिनी चक्रिणी शङ्खिनी खड्गिनी गङ्गिनी शक्तिसहितान् हृदयशिरश्शिखाकवचदेवान् पूजयामीति हृदयशिरश्शिखादितत्तत्स्थानेभ्योऽकुशमुद्रयासमाकृष्याग्नेयनैरृतवायव्येशान कोणस्थदळेषु पूर्वादिचतुर्दळा न्यग्रेष्वस्त्रंच पूजयेत् । ईशानदळे ब्रह्मस्वीशानं अङ्गेषु नेत्रे शिरसिच क्रमेणोत्तरोत्तरदिक्स्थतया पूजयेत् । अथवा कर्णिकायां देवस्य पुरस्तादीशानं नेत्रञ्च पूजयेत् । नेत्रमस्त्रवद्दिक्षु वा पूजयेत् ॥

अथद्वितीयावरणम्— अनन्ताय भूमिसहितायनमः । सूक्ष्माय स्वाहासहिताय नमः । शिवोत्तमाय स्वधासहितायनमः। एकनेत्राय क्षांतिसहितायनमः । एकरुद्राय पुष्टिसहिताय नमः । त्रिमूर्ताय श्रीसहितायनमः। श्रीकण्ठाय कीर्तिसहिताय नमः । शिखण्डिने मेधासहिताय नमः । इति हेमाग्नि मेघ भृङ्गेपु हिम विद्रुम स्फटिकवर्णान् वरदाभयज्ञानरुद्राक्षमालाधारिण स्त्रिणेत्रान् शिवज्ञानावतारकान् स्वस्वशक्तिसहितान् विद्येश्वरान् पूजयामीति पूर्वाद्यैशानादिक्रमा द्विग्विदिक्षु पूर्वादीशानकोणान्तेषु वा पूज-

येत्। कुण्डलीसहिताय नन्दिकेश्वराय नमः। अरुणवर्णं त्रिशूलाक्षसूत्रवराभयकरं कुण्डलीसहितं नन्दिनं पूजयामि । पद्मिनीसहिताय महाकाळाय नमः। पीतकृष्णवर्णं बभ्रुश्मश्रुशिरोरुहं शूलकपालखड्गखेटधारिणं पद्मिनीसहितं महाकाळं पूजयामि। ह्लादिनीसहिताय भृङ्गिणे नमः। श्वेतवर्णं निर्मांसविग्रहं दण्डाक्षसूत्रधराशिखं शिवावलोकनतत्परं ह्लादिनीसहितं भृङ्गिणं पूजयामि। भृङ्गिणीसहिताय गणपतयेनमः। रक्ताङ्ग पाशांकुश दन्तपक्वाम्रफलधारिणं भृङ्गिणीसहितंगणपतिं पूजयामि । भद्रासहिताय वृषभाय नमः। स्फटिकवर्णं धर्मस्वरूपं शिवध्यानपरं भद्रासहितं वृषभं पूजयामि । देवयानीसहिताय स्कन्दायनमः । कनकवर्णं बालवेषं शक्तिकुक्कुटवराभयहस्तं देवयानीसहितं स्कन्दं पूजयामि । अम्बिकायै नमः । श्यामवर्णां सिंहवाहनां शूलादर्शकरद्वया मुमां पूजयामि । रूपिणीसहिताय चण्डेश्वराय नमः । मेघवर्णं चतुर्वक्त्रं कमण्डल्वक्षसूत्रशूलपरशुधारिणं सर्पकङ्कणोपवीतं रूपिणीसहितं चण्डेश्वरं पूजयामि । इति पूर्वादीशानकोणपर्यन्त मर्चयेत् । यद्वा—वृष नन्दि गणेश महाकाळ स्कन्द भृङ्गिगौरीचण्डान् नन्दिगणपति महाकाळ भृङ्गि वृष स्कन्दगौरी चण्डान्वा पूर्वादिक्रमेण पूजयेत्। अथवा गौरी चण्डेश्वर नन्दि महाकाळ गणेश वृष भृङ्गि स्कन्दावा गौरीचण्डेश्वर महाकाळ वृषभ गणेश स्कन्दनन्दि भृङ्गिणोवा उत्तरादिक्रमेण पूजनीयाः ॥ उमावृषभगणपति नन्दीश महाकाळभृङ्गि चण्डस्कन्दाः कुबेरशक्र यमवरुण निर्ऋतिवाय्वीशानादिदिक्षु वा पूजनीयाः । एतेषां ध्यानभेदाश्च तत्तदागमप्रसिद्धा द्रष्टव्याः ॥

एवं गणेश्वरैस्तृतीयावरणं संपूज्य लोकपालैश्चतुर्थावरणमर्चयेत् । इन्द्राय शचीसहिताय नमः । सुवर्णवर्णं मैरावतारूढं वज्रांकुशवराभयपाणिं शचीसहित मिन्द्रं पूजयामि । अग्नये स्वाहासहिताय नमः । रक्तवर्णं

कमण्डल्वक्षसूत्रशक्तिवरमुद्रान्वितं मेषारूढं स्वाहासहित मग्निं पूजयामि । यमाय कालकंठीसहिताय नमः । कृष्णवर्णं दण्डपाशवराभयधारिणं महिषारूढं कालकण्ठीसहितं यमं पूजयामि । दाहिनीसहितायनैर्ऋताय नमः । रक्तवर्णं खड्गखेटकवराभयधारिणं भूतारूढं दाहिनीसहितं नैर्ऋतंपूजयामि। वरुणाय भोगिनीसहिताय नमः । चन्द्रवर्णं पाशकमलवराभयकरं मकरारूढं भोगिनीसहितं वरुणं पूजयामि । वायवे घोरासहिताय नमः । धूम्रवर्णं ध्वजकमलवराभयधारिणं मृगारूढं घोरासहितं वायुं पूजयामि । कुबेराय गंभीरिणीसहिताय नमः । स्वर्णवर्णं गदानिधिवराभयकरं खर्वविग्रहं मनुष्यारूढं गंभीरीणीसहितं कुबेरं पूजयामि । ईशानाय हर्षिणीसहिताय नमः । चन्द्रवर्णं शूलपाशवराभयकरं त्रिणेत्रं वृषभारूढं हर्षिणीसहित मीशानं पूजयामीति प्रागादिक्रमेण पूजयेत् । ब्रह्मणे सावित्रीसहितायनमः। सुवर्णवर्णं चतुर्वक्त्रं कमण्डल्वक्षसूत्रस्रुग्दण्डधारिणं हंसारूढं सावित्रीसहितं ब्रह्माणं पूजयामि । विष्णवे लक्ष्मीसहितायनमः । विद्युद्वर्णं सहस्रफणालंकृतमनन्तरूपं शङ्खचक्रगदाकमलधारिणं कूर्मारूढं लक्ष्मीसहितं विष्णुं पूजयामीति ॥

इन्द्रेशानमध्ये निर्ऋतिवरुणमध्येच विधातृवैकुण्ठौ पूजयेत् । यद्वा यमस्य उत्तरभागे कुबेरस्य दक्षिणभागे च तौपूजयेत् ॥

अथलोकपालायुधैः पञ्चमावरणम्—प्रसन्नात्मशक्तिसहिताय वज्राय नमः । नानावर्णधरं दृढकर्कशविग्रहं वज्रमूर्द्धानं दीप्तं प्रसन्नात्मशक्तिसहितं वज्रं पूजयामि । शक्तये नमः । अरुणवर्णां वराभयकरां शिरसा शक्तिं बिभ्राणां योषिदाकारां शक्तिं पूजयामि । कोपात्मशक्तिसहिताय दण्डाय नमः । कृष्णवर्णं वराभयकरं लोहितलोचनं दण्डमूर्द्धानं कोपात्मशक्तिसहितं दण्डं पूजयामि । गुणात्मशक्तिसहिताय खड्गाय नमः । श्या-

मवर्णं वराभयकरं मग्नलोचनं खड्गालंकृतमूर्द्धानं गुणात्मशक्तिसहितं खड्गं पूजयामि । कोमळात्मशक्तिसहिताय पाशाय नमः । किंशुकपुष्पवर्णं नाभेरधो भुजङ्गाकारं तदूर्द्ध्वं पुरुषाकृतिं सप्तफणोपेतमूर्द्धानं कोमळात्मशक्तिसहितं पाशं पूजयामि । विषात्मशक्तिसहिताय ध्वजायनमः । पीतवर्णं वराभयकरं विवृतास्यं मूर्ध्नि ध्वजान्वितं विषात्मशक्तिसहितं ध्वजं पूजयामि। गदायैनमः । पीतवर्णां योषिदाकारां गदोपेतशिरसं गदां पूजयामि । विकृतात्मशक्तिसहिताय शूलाय नमः । श्यामवर्णं त्रिशूलांकितमस्तकं मञ्जलियुतं विकृतात्मशक्तिसहितं त्रिशूलं पूजयामि । महात्मशक्तिसहिताय पद्माय नमः । शङ्खवर्णं पद्मकोशांकितमूर्द्धानं महात्मशक्तिसहितं पद्मंपूजयामि । मङ्गळात्मशक्तिसहिताय चक्राय नमः । श्यामवर्णं शतारचक्रांकितमस्तकं मङ्गळात्मशक्तिसहितं चक्रं पूजयामि । इमे चावरणदेवाश्शिवाभिमुखा शिवमंबिकांच भक्त्यावीक्षमाणाः स्वासनेषूपविष्टा ध्येयाः । द्विभुजाश्चतुर्भुजाश्चैते हस्ताञ्जलिपुटावाध्येयाः । एवं पञ्चावरणपूजाशक्तौ पञ्चब्रह्मषडङ्गरूपमेकमावरण मर्चयेत् । तेषांच ब्रह्मषडङ्गदेवाना मावाहनस्थापनसन्निधान सन्निरोधन पाद्याचमनार्घ्यपुष्पदानाख्यं संस्काराष्टकं कार्यम् । यद्वा—आवाहनादि संस्काराष्टकं समुदितमेव स्मृत्वा प्रत्येक मर्घ्यमात्रं दत्वा पूरणतया ब्रह्मान्तं तत्तदर्घ्यावसाने क्रमेण सुरभिपद्मत्रिशूलमकरस्रगाख्यमुद्राः प्रदर्श्याङ्गानां नमस्कारमुद्रां प्रदर्शयेत् । पञ्चब्रह्मषडङ्गपूजनाशक्तौ केवलं ब्रह्मावरणमात्र मङ्गावरणमात्रं वाऽर्चयेत् । अथ वा—तत्तत्स्थाने वामादिशक्तिं पूर्वादिदिक्ष्वभ्यर्च्य सदाशिवस्यांके वामभागे स्थितां मनोन्मनी मभ्यर्चयेत् । इत्थमावरणार्चनानन्तरं शिवमष्टपुष्पिकयाऽभ्यर्च्याचमनार्घ्याणि दत्वा मूलमन्त्रेण पुष्पं समर्पयेत् । शिवस्यावरणभावकृतशोभासिद्धये पञ्चब्रह्मषडङ्गादीनां शिवपृथग्भावेनार्चनायां

प्रसक्तस्य पूजातामसत्वदोषस्य परिहाराय शारदशशाङ्ककोटिसङ्काश परमामृतस्यन्दि परमशिवमयूखजालमग्नतया सर्वानप्यावरणदेवान् परमशिवेनैकवर्णान् परमाशिवापृथग्भूतान् भावयेत् । ततश्शिवे धेनुमुद्रां महामुद्रांच प्रदर्श्य गन्धपुष्पैः वग्टामस्त्रमन्त्रेणाभ्यर्च्य सावरणाय देवाय धूपदीपौ प्रदर्शयेत् । एवमावरणार्चनं कर्तव्यं न कर्तव्यं वेति विकल्पितं केषुचि दागमेष्वात्मार्थपूजायां भोगाङ्गपूजनस्य निषिद्धत्वात् ॥

## अथ नैवेद्यविधिः ॥



तत्र व्रीहिशालि प्रियंगु नीवार गोधूम वैणव यवाः प्रशस्ताः । तत्र व्रीहयः कनिष्ठा श्शालयो मध्यमाः इतरे श्रेष्ठाः । तत्रापि प्रियंगुनीवार गोधूम वैणवानि शतसहस्रलक्षानन्तफलान्युत्तरोत्तरं प्रशस्तानि । यद्वा शालयःश्रेष्ठाः यववैणवादयो मद्ध्यमाः व्रीहयः कनिष्ठाः। सिततण्डुलाश्शालयः इतरेव्रीहय इतिभेदः । आत्मार्थपूजायां कुडवादि चतुर्द्रोणपर्यन्तमुत्तरोत्तरं प्रशस्तम् । पञ्चविंशत्युत्तरद्विशतसङ्ख्यैः व्रीहिभि रेका शुक्तिरुच्यते । शुक्तिद्वयं तलम् । तलद्वयं प्रकुञ्चम् । प्रकुञ्चद्वयं प्रसृतिः । प्रसृतिद्वयं कुडवम् । कुडवद्वयमञ्जलिः । अञ्जलिद्वयं प्रस्थम् । प्रस्थद्वयं पात्रम् । पात्रद्वय माढकम् । आढकद्वयं शिवम् । शिवद्वयं द्रोणम् । अथवा गुञ्जाद्वयं माषः । माषविंशतिर्निष्कम् । निष्काष्टकं पलम् । पलचतुष्टयं पादः । पादचतुष्टयं प्रस्थम् । प्रस्थचतुष्टय माढकम् । तच्चतुष्टयं द्रोणम् । द्रोणचतुष्टयावधिकान् नैवेद्यार्थं कल्पितान् केशकीटादिविरहितान् निर्मुक्ततुष कम्बुकणा नखण्डा नतिधावलयशालि तण्डुलान् प्रशस्तवर्णगन्धरसै र्वस्त्रपूते र्जलै र्मुहुर्मुहु र्निष्पीडनपूर्वकं षट्कृत्वष्षडङ्गमन्त्रैस्संक्षाळ्य सम्यग्वालुकादीन् संशोध्य पात्रान्तरे निहितेषुतेष्व

त्रिकार्धात्रधिकं जलं प्राक्षिप्य गोमयेोपलिप्ते प्रोक्षिते पक्षिदर्शनादिरहिते प॰रिश्रिते बहिष्कृताद्यगोचरे महानसे हृदयमन्त्रार्चितायां चुल्ल्यां वामदेवमंत्रेण उद्धृतं पाकभाण्डं हृदयमन्त्रेणारोप्य अघोरेणाग्निं विन्यस्य मुखेन प्रदीप्य यथाऽन्न मपक्वं मतिपक्वं च नभवति तथा सावधानं पचेत् । एवं शुद्धान्नपाकः । तण्डुलद्विगुणक्षीरेण तण्डुलार्धमुद्गसहितेन वा तण्डुल–त्रिगुणक्षीरेण तण्डुलचतुर्थांशमुद्गसहितेन तदुचितगुळकदळीफलयुतेन वा पायसान्नपाकः । तण्डुलचतुर्थांशमानतिलचूर्णेन तिलार्धमानेन तिलचतुर्थांशमानेन वा घृतेन च कृसरान्नपाकः । अथवा तण्डुलार्धमुद्गचूर्णमिश्रैः किञ्चिल्लवणचूर्णयुतैश्च कृसरान्नपाकः । प्रत्येकं तण्डुलार्धप्रमाणाभ्यां क्षीरगुडाभ्यां तदर्धप्रमाणेन घृतेनच गुळान्नपाकः । अथवा तण्डुलद्विगुणक्षीरेण तण्डुलार्धगुळसहितेन गुळार्धघृतसहितेन गुळान्नपाकः। अथवा तण्डुलत्रिगुण क्षीरेण तण्डुलत्रितयांशमुद्गसहितेन तण्डुलचतुर्थांशगुळ-मिश्रेणकदळीफलयुतेनचगुळान्नपाकः । तण्डुलचतुर्थांशै स्तत्तृतीयांशै स्तत्समैर्वा मुद्गै र्नाळिकेरखण्डयुतै स्तद्रहितैर्वा मुद्गान्नपाकः । शुद्धान्नपायसान्न कृसरान्न गुळान्न मुद्गान्नान्युत्तरोत्तरं सहस्रगुणफलानि । एवं दधिमिश्रितं मधुमिश्रितंचान्नं प्रशस्तम् । एतेष्वनेकं एकंवायथाविभवं कार्यम् । नैवेद्यस्याष्टमांशेन षोडशांशेन वा मुद्गाढकी माष राजमाष निष्पाव कुळुत्थाद्यन्यतमेन कर्तव्यम् । एवं मुद्गाद्याश्च सति संभवे निस्त्वग्विदळरूपा ग्राह्याः । शाकानि प्रस्थान्ननैवेद्यस्य पलद्वयप्रमाणेन एकपलप्रमाणेन वा कदळी पनस कूश्माण्डोर्वारुक कारवल्ली व्याघ्रीबृहतीद्वय कोशातकीद्वय चूत नाळीकेर फलादीनि शिशुकन्द वल्लीकन्द सूरणकन्दाद्यन्यानि च प्रशस्तरसगन्धा न्यार्द्राणि शुष्काणि वा यथार्ह लवण मरीचि जीरक एला चूर्ण शर्करादि सकलसंस्कारोपेतानि घृतभर्जितानि का-

र्याणि । आम्लेन घनतक्रेण लवणमरीचि जीरककुळुत्थ सिद्धार्थ-चूर्ण शर्करासहितं चोष्यं कार्यम् । माप मुद्गगोधूम शालिपिष्टादि विकारास्समृद्धशर्करोपेताः कर्पूरैलादिचूर्णैर्वासिता बहवोऽपूपाः पानकादयश्च कार्याः । नैवेद्यस्य षोडशांशं द्वात्रिंशांशं चतुष्षष्टयंशं वा घृतम् । घनदधि अष्टमांशम् । सर्वत्र क्षीरदधिघृतानि गव्यान्येव ग्राह्याणि । स्थालिका स्सुवर्णेन रजतेन ताम्रेण शुद्धकांस्येन वा कर्तव्याः । अष्टचत्वारिंशदंगुळायामाः एकांगुळोत्सेधाः अंगुळघनोष्ठवलयश्चेदुत्तमाः । उत्तमोत्तमादिक्रमेण तु षट्त्रिंशदंगुळप्रभृति द्वादशांगुळपर्यन्तायामा नवयवप्रभृत्येकयवपर्यन्तमानोष्ठवलय ओष्ठप्रमाणायामवेत्रवलय स्तद्रहितावा नवांगुळायामा स्तदर्धमानाश्चातिजघन्याः । सर्वाश्च पादरहिता स्सुवृत्ताकाराः कर्तव्याः । स्थालिकाधारत्रिपाद्यः पूजनीयलिङ्गपीठिकोत्सेधपर्यन्तमुन्नताः प्रकर्तव्याः । नैवेद्यंच सर्वैशिवदीक्षासंस्कृतैः शुद्धवस्त्रै र्भस्मरुद्राक्षभूषितैः पवित्रधारिभिः परिचारकैः कारयेत् । तथा भूषिताभिः स्त्रीभिर्वा कारयित्वा द्रव्यशुद्धिकाले पूजकस्तण्डुलक्षाळनादिमन्त्रान्जपेत् । यदि कृतं नैवेद्य मपक्व मतिपक्वं कालातिपाता दतिशीतळं नरैर्लंघितं वा स्यात् तदाऽन्यत्पक्वं निवेदनीयम् ॥

अथनैवेद्यसमर्पणम्— देवस्य पाद्यमाचमनीय मर्घ्यं च दत्वा देवस्य पुरतो गोमयेन चतुरश्रं मण्डलं परिकल्प्य पिष्टादिचूर्णै रलंकृत्यशुद्धान्नपायसान्नादिपूरिताः कदळीनाळिकेर चूत पनसद्राक्षा खर्जूरादिफलैर्लड्डुककस्तूरिकापिष्टक मोदकादिभि रपूपैः कदळीपनसादिशाकै रार्द्रकोर्वारुकादिहारितै स्सूतनारंगाद्युपदंशै र्मुद्गविदळ्यादिसूपैश्चवलयाकारसोपानक्रमेण निबद्धै भूषिताः मद्धये क्षीरदधिघनैरलंकृताः सद्योघृताभिषिक्ताः [illegible]दधिक्षीर

फलरसादिविकारैर्नानाविधपेयचोष्यलेह्यैः क्षीरदधिनवनीतघृतै रेलाचंपक-मुकुळ कर्पूर मृगमद लामज्ज पाटलीपुष्पादिवासित सुशीतळ स्नपनकल-शाहृताढकतदर्ध तदर्धप्रमाणेन पानीयेन परिपूरितैश्चषकैः परितः परिष्कृ-ताः शिवस्य शिवायाश्च नैवेद्यस्थालिकाः सदाशिवस्य मनोन्मन्याश्च परि-वारदेवताना मावरणदेवतानां च नैवेद्यस्थालिकाश्च निधाय स्थालिकाना-मुपरि पत्रं विन्यस्य हृदयेन प्रोक्ष्य ताळत्रय दिग्बन्धनावकुण्ठन धेनुमुद्रा विरचय्य अन्नमुद्रां पर्वतमुद्रां प्रदर्श्य पूर्वविन्यस्तं पत्रमुद्धृत्यास्त्रेणपरिषिच्य हृदयेन प्रत्येक मापोशनं दत्वासपुष्पया मृगमुद्रया पूर्वं गणपतये निवेद्य तत्पु-ष्पं विसृज्य हस्तप्रक्षाळनं कृत्वा हां हौं शिवाय स्वधेति शिवाय नैवेद्यं पञ्चवारं त्रिवार मेकवारंवा नैवेद्यदानाभिनयवत्या सपुष्पया मृगमुद्रया नैवे-द्यंदत्वा सदाशिवादिक्रमेण सर्वेभ्योऽपि पृथक्पृथक् नैवेद्यं दद्यात् । पृथक् पात्रासंभवे सर्वासां परिवारावरणदेवताना मेकस्मिन्नेव पात्रे नैवेद्यमानीय प्रत्येकं निवेदयेत् । ततश्शिवाय सुगन्धिपानीयं प्रदाय नमोन्तमूलेन पुष्पं समर्प्य द्रव्यजातं संपूर्णं विभाव्य स्वधान्तमूलेनाचमनं दत्वा देवस्य सव्यवामहस्तयो रुद्वर्तनार्थं कर्पूरादिसहितं चन्दनं दत्वा हस्तप्रक्षाळन-गण्डूष पादक्षाळनादि भावयेत् । सर्वाणि च निर्माल्यान्युद्धृत्य सदाशि-वनिर्माल्यं प्रागीशदिशि विन्यस्तगन्धपुष्पनिर्माल्याभ्यां सह ऐशान्यां दिशि चण्डेशाय निवेदयेत् ॥

अथ सदाशिवः केन वक्त्रेण भुङ्क्ते ऊर्ध्ववक्त्रेण । 'भक्ष्यभोज्यान्नपा-नादि लेह्यं चोष्य मनेकधा । ऊर्ध्ववक्त्रे प्रदातव्यं यत्किंचिदिह चो-दित' मिति सर्वज्ञानोत्तरवचनात् । 'भक्ष्यंभोज्यं च पेयं च लेह्यं चोष्यं च पञ्चधा । ऊर्ध्ववक्त्रे प्रदातव्यं हृदयेन षडानने'ति द्विशतीवचनाच्च । अथवा पञ्चभिरपि वक्त्रैर्भुङ्क्ते । 'पञ्चवक्त्रेषु नैवेद्य मूर्ध्ववक्त्रेऽथवा पुन'

रिति पञ्चसु वक्त्रेषु प्रत्येकनैवेद्यविधानस्यापि दर्शनात् । ऊर्द्ध्ववक्त्रे नैवेद्यदानं च तदूर्द्ध्ववक्त्रं पूजाकाले दक्षिणामुखीभूतं विभाव्य कर्तव्यम् । देवस्य दिश्युत्तराभिमुखतया पूजकस्य स्थितत्वात् । 'स्थण्डिलेचरलिङ्गेच साधकाभिमुखश्शिवः । प्रत्यवक्त्र स्सकुंभादौ स्थिरे द्वाराभिसम्मुख'इति चरलिङ्गार्चने देवस्य पूजकाभिमुखत्वश्रवणात् । एवंचात्मार्थपूजायां शिवस्य साधकाभिमुखत्वसिद्ध्यर्थं हृदयगुह्यपादावयवा अपि दक्षिणदिक्स्था एव । यानितु पूजकस्य शिवाभिमुखावस्थानपरिहारवचनानि 'नप्राच्यामग्रतश्शंभो र्नोत्तरे योषिदाश्रये । न प्रतीच्यां यतः पृष्ठं तस्माद्दक्षं समाश्रये'दित्यादीनि, तानि पूर्वाभिमुखस्थिरलिङ्गविषयाणि । चरलिङ्गपूजायां 'स्थण्डिले चरलिङ्गे च साधकाभिमुखशिव'इति विशेषवचनदर्शनात् । 'अग्नौ वा निर्ऋतौ वाऽपि स्थित्वा देवं प्रपूजये'दिति वचनानुसारेण पूजकस्याग्नेयदिगवस्थाने शिवस्य पूजकाभिमुखत्वं नलभ्यतइतिचेत् सत्यं । तदपि वचनं स्थिरलिङ्गविषयमेव । स्थिरलिङ्गं सर्वसाधारण्येन लोकानुग्राहकत्वाच्च चतसृषु दिक्षु स्वेष्टमुखमिति यस्यां दिशिद्वारं तद्दिगभिमुखं भवति । तत्र हृच्चरणैस्सार्धं मूर्द्ध्वमुखं तद्द्वाराभिमुखं । द्वारस्याभिमुखंचोर्द्ध्ववक्त्रं तत्र प्रकल्पयेदिति वचनात् । 'यस्यां दिशि भवेत्द्वारं तां प्राचीं परिकल्पये' दिति वचनाच्च । अथवा ऊर्द्ध्ववक्त्र मेकमेव हृद्गुह्यचरणैस्सह द्वाराभिमुखं भवति । तत्पुरुषादिवक्त्राणि तु पूर्वादिदिक्ष्वेव व्यवस्थितानि नतु द्वारभेदेन भिद्यन्ते । 'प्रासादस्य द्वारम्भवतु यथा काष्टया कामं । तत्पुरुषादिमुखानि नजहति पूर्वादिदिक्संस्था'मिति वचनात् । इदं तत्पुरुषादिवक्त्रविषये पक्षद्वयमपि कामिकसंमतम् । अतएव तत्र पश्चिमद्वारार्चने 'द्वारस्याभिमुखं चोर्द्ध्ववक्त्रं देहं प्रकल्पये'दित्युपक्रम्य 'पुरुषं पूर्व देशेवापश्चिमे वाऽथ चिन्तयेत् । दक्षिणे वोत्तरेवाऽपि बहुरूपं विचिन्तयेत् ॥ उत्तरे

दक्षिणे वाऽपि वामदेवं स्मरेत् गुरुः । पश्चिमे पूर्वदेशे वा सद्यवक्त्रंस्मर-न्नयसेत्' इत्युक्तम् ॥ तत्रैव दक्षिणद्वारार्चनेऽप्युक्तम्— 'अघोरं पुरुषं वाऽपि दक्षिणेसम्यगर्चयेत् । अघोरंवाऽथ सद्यं वा पश्चिमेतु समर्चयेत् ॥ सद्यवक्त्रं तु वामं वा सौम्यदेशे समर्चयेत् । पुरुषं वाऽथ वामं वा पूर्व देशेसमर्चयेत्' इति ॥ सर्वमपि स्थिर मुत्तराभिमुखं पूजनीयम् । 'लिङ्गं वा प्रतिमा वा क्रियतेऽन्यद्वा यया ककुभा । तस्यां तस्यां यज्वा यजेत शिवमुत्तराभिमुख' इति वचनात् । तत्र मुख्यपूर्वाभिमुखलिङ्गपूजायां मुख्याग्नेयदिशि स्थितस्य पूजकस्य मुख्य मुत्तराभिमुखत्वमेव घटते । नच देवस्य वामभागे नैर्ऋत-देशे देव्या निविष्टत्वात्तत्र पूजकस्योपस्थितौ 'नोत्तरे योषिदाश्रय'इति निषेधप्रसङ्गः । कामिके पश्चिमद्वारार्चनपटले 'वामेवा दक्षिणेवाऽपि स्थाप-नीया मनोन्मनी । देवसंमुखसंयुक्ता द्विहस्तैकमुखान्विते'ति पश्चिमाभिमु-खलिङ्गपूजायां दक्षिणभागेऽपि देवीनिवेशनस्यांगीकृतत्वेन नैर्ऋतदिक्स्थि-तस्य पूजकस्य देवदक्षिणभागनिविष्टदेवीभावनोपपत्तेः । एवं दक्षिण-दिग्रूप गौणपूर्वाभिमुखलिङ्गपूजायां नैर्ऋतदिग्रूपगौणाग्नेयदिशिस्थितस्य प्रा-चीरूपगौणोत्तराभिमुखत्वं उत्तरादिग्रूपगौणपूर्वाभिमुखलिङ्गपूजायामीशानदिग्रू-पगौणाग्नेयदिशि स्थितस्य प्रतीचीरूपगौणोत्तरवक्त्रत्वंच घटते । एवं पूज-काभिमुखत्वनियमो नविहन्यते । सर्वत्रात्मार्थपूजाप्रकरणे 'उत्तराभि-मुखो भूत्वा रुचिरासनसंस्थित' इत्यादिविधानात् । तत्रायं विशेषः— पापक्षयार्थिभिर्मुक्त्यार्थिभिश्च मुखानां दिश्यवस्थामाश्रित्याघोरवक्त्र मभिमुख-त्वेन भावनीयम् । 'न विभोः पुरतस्तिष्ठेत् न पश्चात् त्स्यन्तिकेऽपिच। अघौघध्वंसमोक्षार्थं दक्षे दक्षस्थितोऽर्चयेत् ॥ हिमं मरुच्च शीतञ्च पद्मं निर्दहतेयथा । तथाऽघोरः प्रशान्तोऽपि पापनिर्दाहकारकः ॥ महानपि यथा दन्ती यन्तारमनुवर्तते । तस्मादातेन वचसा उत्तराभिमुखो यजेत् ॥ इत्यघो-

रमुखस्य सकलपापहरत्वेन प्रशंसादर्शनात् । 'अजातमिममेवैकं मत्वा-जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणामुखम्' इति वायुसंहितायां दक्षिणमुखस्य मुक्तिप्रदत्वेन प्रशंसादर्शनात् । भोगपूर्वकमोक्षार्थिभिस्तु तत्पुरुषमुखस्य द्वाराभिमुख्यन्यायेन साधकाभिमुख्यन्यायेन वा साधकाभिमुख्यपक्षमाश्रित्य तत्पुरुषमुखमभिमुखत्वेन भावनीयम् 'प्रसन्नत्वं यदीशस्य स्तैमित्यं पुरुषस्यच । चण्डत्वं बहुरूपस्य मुक्तिस्थित्यन्तहेतुकम्' इति तत्पुरुषमुखस्य स्थितिहेतुत्वश्रवणात् । सर्वथाऽप्यूर्द्ध्ववक्त्रस्य दक्षिणाभिमुखत्वं स्थितमेव । एवञ्चावाहनादिक्रमं देवस्याभिमुख्यमप्यात्मार्थपूजायामाञ्जस्यं लभते । अन्यथा परार्थपूजायामिव तदूर्द्ध्वमुखस्य ऊर्द्ध्वाभिमुखत्वत्यागमात्रपरतया कथंचिन्निर्वाह्यं स्यात् । परार्थपूजायां लोकानुग्रहप्रयोजनायां विशिष्य पूजकाभिमुख्यं नापेक्षितमिति युक्तं तत्र द्वाराभिमुखस्यैव कथञ्चित् लोकाभिमुख्यसमर्थनम् । इहतुसाधकानुग्रहार्थायामात्मार्थपूजायां'स्थण्डिले चरलिङ्गेचे'तिवचनवत्कदाचिदस्येन संभवत्साधकाभिमुख्यं किमित्युपेक्षितमिति केषांचिन्मतम् ।अन्येत्वाहुः-आत्मार्थपूजायामूर्द्ध्ववक्त्रं हृत् गुह्यचरणैस्सह तत्पुरुषवक्त्रंच पूर्वाभिमुखमेव । अंशुमदादितन्त्रेष्वात्मार्थपूजाप्रकारण एव न विभोः पुरतस्तिष्ठेन्नपश्चात्तस्त्र्यंतिकेऽपिच । नयोपित्सान्निध्यौ नाग्रे नपृष्ठेस्वामिनोभवे'दित्यादिवचनानां पठितत्वेन तेषां परार्थपूजाविषयतया नेतु मशक्यत्वात् । साधकाभिमुख्यवचनस्य दीक्षाप्रकरणे पठितत्वेनततो नित्यपूजायां साधकाभिमुख्यालाभात् । नच दीक्षायां चरलिङ्गपूजाप्रसक्त्यभावात् चरलिङ्गे साधकाभिमुख्यवचनस्य नित्यपूजाविषयत्वमेवेति वाच्यम् । दीक्षायामपि चरलिङ्गार्चने दोषाभावात् । तस्मान्नित्यपवादात् नप्राच्यामग्रतइति वचनात् नित्यनैमित्तिककाम्ये सर्वाधिकारणः सदाशिवः पूर्वाननो लक्ष्मीप्रत्यक्स्नष्टकालतनु'रिति लक्ष्मीकेशवसंवादे, 'दीक्षा-

दिषुघटेशस्य प्रतीच्यां चिन्तयेद्गुरुम् । ईशं तत्पुरुषं शान्तं नित्ये नित्ये पुरानन'मिति मुखबिंबे 'ध्यायेत् सदाशिवं नित्यं प्राङ्मुखेशास्यवक्षसाम् । दीक्षादौ कलशाधारं तमेव प्रत्यगानन'मिति बृहद्भार्गवादिषु च सदानित्य-शब्दाभ्यां विशेषविहितदीक्षादिव्यतिरिक्तेषु सर्वेष्वपि नित्यनैमित्तिक का-म्येष्वीशान पुरुषमुखयोः प्राङ्मुखत्वश्रवणा देतेषां वचनानां द्वाराभिमु-खत्व नियतस्थिर लिङ्गप्रहाणेन चरलिङ्गादिविषयावश्यंभावाच्चात्मार्थपूजा-यां नित्यनैमित्तिककाम्यरूपायां शिवस्य पूर्वाभिमुखत्व मौत्सर्गिकम् । दीक्षादिनैमित्तिकेषु विशेषवचनैर्दक्षिणमुखत्वादिरूप स्तदपवाद इति । इदं चान्यदाहुः । ईशानतत्पुरुषमुखयोर्मध्येऽपि सदाशिवस्तत्पुरुषमुखेनैव भुङ्क्ते । 'द्वारं पश्चिम मेवं तु नैवेद्यं पूर्ववक्त्रक'मिति सूक्ष्मवचनादीशान-वक्त्रस्य शिरोरूपतया तत्र नैवेद्यदानस्य लोकविरुद्धत्वा च्चेति ॥ अस्तु तत्पुरुषमुखेन भुङ्क्ते इत्यपि कश्चन पक्षः । नतु तेनैवेति नियमः । 'भक्ष्यभोज्यान्नपानादी'त्यादिप्रागुदाहृत विषमवचनै 'रूर्द्ध्ववक्त्रे महासेन आहुतिं संप्रदापये'दित्यादिवचनैश्चोर्द्ध्वमुखेनापि भोजनावगमात्, 'पञ्चव-क्त्रेषु नैवेद्य'मिति वचनेन 'ततोहविःप्रदानं स्यात् पञ्चवक्त्रेषु चैव हि । ईशानस्य तु शुद्धान्नं गौडं तत्पुरुषे ततः ॥ कृसरं दक्षिणे वक्त्रे मुद्गान्नं च तथोत्तरे । पश्चिमे पायसंचैव स्वस्व नाम्ना समाहितः ॥ दापयेत्स्व-स्वदिग्भागे ईशानस्याग्रतो भवेत् । अलाभे पञ्चहविषा मग्रे शुद्धान्नमिष्य-ते'इति प्रतिवक्त्रनैवेद्यभेदप्रतिपादकवचनजातेन च पञ्चभिर्वक्त्रै र्भोजना-च्च । नह्यागमाना मविशिष्टे प्रामाण्ये कस्यचिदर्थोऽनुष्ठेयो नान्यस्येति यु-क्तम् । तस्मात्तत्तदागमवचनप्राप्तपक्षत्रयस्यापि विकल्प इत्येव युक्तम् । ननु नैवेद्यदानमुद्रया शिवे नैवेद्यं समर्पयता पूजकेन किं शिवस्य हस्ते तत्सम-र्पणीयं उत तत्तद्वक्त्र एव । अत्रापि विकल्प एव । उत्तरत्र 'अमृती-कृत्य गोस्तन्या निवेद्य कुसुमं न्यसेत् । निवेद्यदक्षिणे हस्ते दद्यात्पानीय

मुत्तम'मिति दक्षिणहस्ते नैवेद्यसमर्पणश्रवणात्, 'ऊर्द्ध्ववक्त्रे तु दातव्यं यत्किञ्चिदिह चोदितम् । ऊर्द्ध्ववक्त्रे महासेन आहुतिं संप्रदापये' दिति वक्त्रे समर्पणश्रवणाच्च । एवंचात्र योग्यतानुसारेण व्यवस्थितोविकल्पः । यद्धृदयादिसंमिते पुरुषवक्त्रे निवेदितव्यं द्रवद्रव्यवर्जं भक्ष्यभोज्यादि तत्सर्वं परित्यक्ताभयमुद्रे वामहस्ते समर्पणीयम् । यद्वक्त्रान्तरे निवेदनीयं यच्च पानीयादिद्रवद्रव्यजातं तत्सर्व मग्निहोत्राहुतिवत् सूक्ष्मरसरूपेण स्थालिकाभ्यो निर्गत्य तत्तद्वक्त्रपर्यन्तं नैवेद्यमुद्रया सहागतं सम्भावयता साक्षात्तद्वक्त्र एव समर्पणीयमिति । एवञ्च हस्ते समर्पणसंभवाद्धस्तोद्वर्तनस्य न वैफल्यम् । पूजकहस्तेन तद्वक्त्रे नैवेद्यप्रक्षेपाभावात् पूजकहस्तस्य न निर्माल्यसङ्करप्रसङ्गः ॥ इति नैवेद्यविधिः ॥

## तांबूलदानम् ॥

अथ मुखवासं ताम्बूलं च निवेदयेत् । भोजनानन्तरं मुखे वासार्थं यद्दीयते तन्मुखंवासयतीति व्युत्पत्या मुखवासम् । तच्च एलालवङ्ग तक्कोल जातीफल कर्पूरचूर्ण हिमजलपिष्टंगुळकीकृत मित्युक्तम् । एलालवङ्गांकित तक्कोल जातीफल कर्पूरचूर्ण [illegible]भुसितायुक्तं केवलंवा पञ्चसौगन्धिकाख्य मुत्तमम् । केवलं कर्पूर[illegible]तीलवङ्गतक्कोलचूर्णंवा मध्यमम् । प्रस्थनैवेद्यस्य द्विधाकृतमृदुक्रमुकखण्डानि षट्चत्वारिंशद्वेपत्राणि क्रमुकफलापेक्षया चतुर्गुणानि त्रिगुणानि द्विगुणानिवा शुभ्राणि खण्डितमूलाग्राणि शिलाचूर्णं चेतिसर्वमिदं संगृह्य कर्पूरादिसहितं सुपक्कसंस्कृतनाळिकेरमातुलिङ्गफलयुक्तं तांबूलं निवेदयेत् । ततोमूलमन्त्रेण विशेषार्घ्यं दत्वा एकत्रिपञ्चसप्तनवावृत्तियुक्तदीपं प्रदर्श्य त्रिताल पञ्चताल नागचक्रपद्म पुरुषमृग गजारूढदेवेन्द्राद्याकृतिपात्र निहितान् दीपानपि यथाविभवं प्रदर्श्यारात्रिकं कुर्यात् ॥

## आरात्रिक विधिः ॥

तत्प्रकारः— सुवर्णरजतताम्रकांस्यान्यतमनिर्मिते चतुर्विंशत्यंगुलिमाने तदर्धमानेवा तत्तृतीयांशमानया स्वमानपञ्चमोत्सेधया यवद्वयायामोत्सेधपट्टिकया कर्णिकया शोभिते ततो बहिरष्टदळयुक्ते परितः कर्णिकामानोष्ठसहिते सुवृत्ताकारे पात्रे कर्णिकायां मध्ये परितश्च कृतेषु सहजेषु शालिपिष्टमयेषु वा दीपासनेषु कर्पूरादिमयीं वर्तिं निधाय नव पञ्च वा दीपान् मध्यएव एकं वा दीपमारोप्य त्रिपाद्यां विन्यस्य निरीक्षणादिभिस्संस्कृत्य, नव चेन्मध्ये सूर्यं दिक्षु गुरुशुक्रबुधचन्द्रान् विदिक्षु भौमशनिराहुकेतून्, पञ्चचेन्मध्ये वह्निं दिक्षु गगनवायुजलपृथिवीः, एकश्चेत् वह्निं चाभ्यर्चयेत् । यद्वा—नवपञ्चैकदीपेषु वामादिशक्तीः पञ्चब्रह्माणि शिवं चार्चयेत् । एवं गन्धपुष्पधूपदीपैरभ्यर्च्य दिग्बन्धनमन्त्रेण कृत्वा सुरभिमुद्रां प्रदर्श्य पाणिभ्यामुद्धृत्य देवस्य शिरसि हृदये पादयोश्च त्रिर्भ्रामयित्वा सुवर्णादिनिर्मितैर्वृत्ताकारै श्चतुरश्राकारैर्वा मुकुळाग्रशालिनाळयुक्तै स्सहजशालिपिष्टकृतान्यतरदीपासनयुक्तै दीपासननिहितकर्पूरादिवर्तिष्वारोपितदीपै र्नीराजनपात्रैर्नीराजनान्यपि निरीक्षणादिभिस्संस्कृतान्यारात्रिकवत् भ्रामयित्वा भूमौ विन्यस्यास्त्रेण निर्वापयेत् । नीराजनपात्राणि त्रिविधानि । प्रादेशमात्रविस्तारं यवद्वयघन मष्टांगुळनाळं तदनुसारिमुकुळमुत्तमम् । तस्य मध्ये एकं दीपासनं पञ्चस्वावृत्तिषु क्रमा न्नव पञ्चदश एकविंशतिः सप्तविंशतिः त्रयस्त्रिंशदिति षडुत्तरशतं दीपाः । यद्वा क्रमादावृतिष्वष्टौ चतुर्दश विंशतिः षड्विंशतिः द्वात्रिंशद्दीपासनानीति एकोत्तरशतंदीपाः । उत्तमपात्रार्धमानं पात्रं मध्यमम् । अस्य मध्ये एकं चतुर्ष्वावरणेषु अष्टौ त्रयोदशाष्टादश त्रयोविंशतिर्दीपासनानीतित्रिषष्टिर्दीपाः । मध्यमादर्धमानं कनिष्ठम् । अस्य मध्ये एकं त्रिष्वावरणेषु षट् दश चतुर्दशदीपास-

नानीति एकत्रिंशद्दीपाः । अथ दर्पणच्छत्रचामर व्यजनताळवृन्तानि क्रमादीशानादिमन्त्रैस्समर्प्य तद्दिवसार्जितवाङ्मनःकायदोषपरिहाराय शिवसायुज्यप्राप्तये च दूर्वाकुशाक्षतबिल्वपत्रसहितपुष्पाञ्जलिं हां हौं शिवतत्वाधिपतये शिवायनमः । हां हौं विद्यातत्वाधिपतये शिवाय नमः । हां हौं आत्मतत्वाधिपतये शिवाय नमः । इति त्रिवारं समर्पयेत् । मुमुक्षुश्चेदात्मतत्वादिक्रमेण अथवा सर्वतत्वाधिपतये शिवायनम इति सकृदेववा समर्पयेत् । ततः पूजया सन्तुष्टं स्वाभिमुखीकृताञ्जलिपुटसकलभोगाङ्गसेव्यमानं यागमन्दिरद्वारबाह्यस्थब्रह्मोपेन्द्रमहेन्द्रचन्द्रसूर्यादिस्तूयमान मपारकरुणामृतसमुद्रं भक्तजनसकलाभीष्टप्रदश्च शिवं ध्यात्वा पूजासाद्गुण्यार्थं यथाशक्ति श्रीमत्पञ्चाक्षरजपं कुर्यात् ॥

## पञ्चाक्षरजपविधिः ॥

श्रीमत्पञ्चाक्षरस्याथ प्रकारः प्रतिपाद्यते ।
गुरूपदिष्टमार्गेण गोपनीयः प्रयत्नतः ॥
शिवासनपद्मस्य दक्षिणदळे अघोरमूर्तेर्दक्षिणभागे ।
तप्तचामीकरप्रख्यां पीनोन्नतपयोधराम् ।
चतुर्भुजां त्रिणयनां बालेन्दुकृतशेखराम् ॥
पद्मोत्पलधरां सौम्यां वरदाभयपाणिकाम् ।
सर्वलक्षणसंपन्नां सर्वाभरणभूषिताम् ॥
सितपद्मासनासीनां नीलकुञ्चितमूर्धजाम् ।
श्रीमत्पञ्चाक्षरींविद्यां मनसावाहनादिभिः ॥
गन्धपुष्पै धूपदीपै नैवेद्येन च पूजयेत् ।
सुखासने समाविष्टो रक्षिताक्ष उदङ् मुखः ।
नासाग्रन्यस्तदङ्मौनी विदध्यादात्मरक्षणम् ॥

स्रवत्पीयूषसङ्घातप्लाविताशेषदिक्तटम् ।
स्मरे दूर्द्ध्वमधस्ताच्च चन्द्रमण्डलसंयुतम् ॥

बिंबसंपुटमध्यस्थं सुधाधारापरिप्लुतम् ।
स्वदेहं चिन्तयेच्छाक्तैस्सुधावर्षैः स्सुधात्मकम् ॥

आत्मरक्षा भवेदेषा सुरैरपि नभिद्यते ।
आत्मरक्षां विधायेत्थं मन्त्ररक्षा मथाचरेत् ॥

रेचये दुदराद्वायुं दक्षनाड्याऽस्त्रमन्त्रतः ।
इडया पूरयेद्बाह्यात् शंभुना वायुनोदरम् ॥

अपान मूर्द्ध्वमुत्कृष्य प्राणापानौ निरुद्ध्य च ।
कुंभेन मनसा वायुं सुषुम्नायां नियोजयेत् ॥

सुषुम्नामध्यसंस्थायां हृद्देशेशिवसंयुजि ।
मन्त्रन्नियोजयेन्मन्त्री चिच्छक्तौ मन्त्रमातरि ॥

मन्त्राक्षराणि मणिवत् प्रभावन्मन्त्रदेवताम् ।
गमागमप्रयोगेन स्मरन्मन्त्रं जपेत्सुधीः ॥

वाच्यवाचकसंबन्धं जपेत्सद्गतमानसः ।
मन्त्ररक्षा भवेदेषा संहिता सुररक्षिता ॥

इत्थं विदित्वा यत्नेन जपकर्म समाचरेत् ।
जपकर्मक्रमस्तोऽथ सुस्पष्टं प्रतिपाद्यते ॥

नाभ्यादिद्वादशान्तान्तं सोमसूर्याग्निरूपिणीम् ।
आनन्दरूपिणीं शक्तिं सुषुम्नान्तर्गतां पराम् ॥

आधारचक्रमारभ्य बोधयित्वाऽनिलेन ताम् ।
ब्रह्माणं केशवं रुद्र मीश्वरंच सदाशिवम् ॥

हृत्कण्ठतालुभ्रूब्रह्मरन्ध्रस्थानेषु तान्क्रमात् ।
त्यक्त्वा त्यक्त्वाऽत्रमन्त्रांशं विद्युल्लेखानिभं बुधः ॥
मन्त्रं नादान्तमुच्चार्य मूलाधारगतं पुनः ।
गमागमप्रयोगेण जपेत्साष्टशतं तथा ॥
अष्टाविंशतिमष्टौवा गुरुणाचयथोदितम् ।
इत्थं कृत्वा जपं मन्त्री शिवसायुज्यमाप्नुयात् ॥

जपश्चाभ्यन्तर्याऽकारादिक्षकारान्तवर्णमालारूपया बाह्यया रुद्राक्षादिनिर्मितया वा कर्तव्या । तन्त्रान्तर्या जपप्रकारः कथ्यते । ब्रह्मरन्ध्रे धवळाष्टदळचतुरश्रयंत्रमुपरि श्रितं पद्मं भावनीयम् । तस्य कर्णिकायां व्योम तत्पूर्ववर्णं चतुर्दशस्वरविसर्जनीयसमुदायरूपं बीजं केसरेष्वष्ट स्वरद्वंद्वानि दळेषु कादयः पञ्चपञ्च वर्णाः चतुरश्रयन्त्रस्य दिक्षु सुधाबीजं विदिक्षुच सप्तमो वर्णः । एवंरूपंमातृकं पद्मं भावनामात्रेण विशेषरोगमृत्युहरम् । ततो द्वारक्रमंचानुद्रुतवायुसंधुक्षितमूलाधाराग्निशिखया कुण्डलिनीशक्त्या सह सुषुम्नारन्ध्रं प्रविश्य ब्रह्मरन्ध्रपर्यन्तमुद्गतेडास्पृष्टात्तस्मान्मातृकापद्मात्स्यंदितां क्षकाराद्यकारान्तवर्णपङ्क्तिरूपाममृतबिन्दुसन्ततिं ब्रह्मरन्ध्रप्रभृति मूलाधारपर्यन्तं व्याप्यावतिष्ठमानां भावयेत् । या कुण्डलिनी शक्तिः मूलाधाराग्निशिखासामरस्येन प्रकाशमानसुषुम्नामार्गेण ब्रह्मरन्ध्रपर्यन्तमुद्गता सैव मातृकापद्मविद्रुतामृतबिन्दु स्यंदि सन्ततिसामरस्येनामृतायमाणा परमानन्दरूपिणी मातृकाशक्तिरितिभावयेत् । तदाहुः—‘प्रकाशमानां प्रथमप्रयाणे प्रतिप्रयाणे त्वमृतायमाणाम् । अन्तःपदव्या मनुसञ्चरन्तीमाणन्दमुद्रा मवलोकयामः’इति ॥ ब्रह्मरन्ध्रस्थितमातृकापद्मप्रभृत्यकारादिक्रमेण मूलाधारपर्यन्तं व्याप्य स्थितायां मातृकारूपायां शक्तावकारादिभिरष्टाभिर्वर्णैरेकोवर्गः ल्हकारादिभिरष्टाभिरन्यः ककारादिभिः पञ्चभिः पञ्च-

भिर्वर्णैस्सप्तवर्गाः । नववर्गाः क्रमादादित्यसोमबुधगुरुशुक्रांगारकशनिराहु-केतुरत्नरूपाः । माणिक्यवैडूर्यकपुष्यरागवज्रप्रवाळगुळिकावलवैरिरत्नैः । गोमेतकैर्मरकतैश्च कृताऽक्षमाला श्लाघ्या नवग्रहमयाखिलवर्णपूर्णा॥ एनाम-क्षमालां हृत्पुण्डरीकमध्यागतदीपाकारपरमेश्वरप्रभारूपशब्दैः पराख्यशक्ति-निस्सृतां विभावयेत् ॥ तदग्रे मूलमन्त्रे नवरत्नमयकल्पलताग्रे पुष्पात् विनिस्सृतं विभाव्य क्षकारं मेरुं कृत्वा ळकारादिक्रमेणाक्षमालायां मूल-मन्त्रस्य गमागमौ विभावयेत् । तस्यांमन्त्रस्यारोहणभावनयां मन्त्रस्य शिरसि ळकारादिसहितवर्णान् विसर्जनीयसहितान् विन्यस्य अवरोहण-भावनायां मन्त्रस्य अकारादिवर्णान् बिंद्वन्तान्विन्यस्य जपंकुर्यात् । एवं कृते शतं मन्त्रस्यावृत्तयो भवन्ति । तदनन्तरं षोडशस्वरवर्गस्पर्शवर्गपञ्च-कान्तस्थवर्ग ऊष्मवर्गाष्टके क्रमेण मन्त्रं विन्यस्याष्टधा मन्त्रमावर्तयेत् । एवमष्टोत्तरशतसङ्ख्यजपः कृतो भवति । जपारंभकाले च मूलमन्त्रेण तस्य परदेवतां मणिना प्रभामिव समरसीभूतां मूलमन्त्रेणसह तदीयान्न-कारादिवर्णान् पीतकृष्णधूम्रपीतरक्तवर्णान् तद्देवतारूपतया तत्समरसी-भूतान् ब्रह्मविष्णुरुद्रेश्वरसदाशिवांश्च विभावयेत् । हृत्कण्ठतालुभ्रूमध्य-ब्रह्मरन्ध्रेषु क्रमेण नकारादिवर्णैः स्सह ब्रह्मादीन्परित्यजेत् । अयमर्थ-स्सर्वोऽपि प्राक् लिखितश्लोकेषु संक्षेपेणसूचितः । एवमाभ्यन्तराक्षमालया जप्तुमशक्तः प्रागुक्तक्रमेण जपारम्भकाले मन्त्रं मातृकाशक्त्यारूढं विभाव्य मन्त्रमातृकाक्षराणि विभाव्य केवलमेव मन्त्रं रुद्राक्षादिकृतबाह्याक्षमालया गणयन् जपेत् ॥

तत्प्रकारः—उत्तमादिक्रमेणामलक बदर चणकप्रमाणै रेकवक्त्रैस्त्रिव-क्त्रैश्चतुःपञ्चषट्सप्ताष्टनवदशैकादशवक्त्रैर्वा एकसङ्ख्यवक्त्रैर्भिन्नसङ्ख्यव-क्त्रामिश्रितै रष्टोत्तरसङ्ख्यै श्चतुःपञ्चाशत्सङ्ख्यै स्सप्तविंशतिसङ्ख्यैर्वा सुवर्णरज-

तादिमये क्षौमपट्टादिमयेवासूत्रे परस्परमुखसंयोजनेन परस्परपुच्छसंयोजनेन च स्यूते मेरुसहितैः वर्णानुगुणरुद्राक्षैर्निर्मितां सद्योजातादिमन्त्रैः प्रत्येकं शतवारावृत्तैः क्रमेणाभिमन्त्रितमेरुकां शिवपूजाक्रमेणावाहनादिभिः पूजितां जपारम्भकाले हुंफडंतास्त्रमन्त्रेण प्रोक्षितां हृदयेन गन्धपुष्पादिभि र्माला-मुद्राप्रदर्शनेन च पूजितां दक्षिणहस्तगृहीतां वस्त्रसंगोपितामक्षमालां वाचिकजपे मद्ध्यमायां निधाय तर्जन्यगुंष्ठाभ्यां, उपांशुजपे अनामिकायां निधायमध्यमांगुष्ठाभ्यां, मानसजपे कानिष्ठिकायां निधायानामिकांगुष्ठाभ्यां च गणयेत् । बुभुक्षु रक्षमाला मधोनयेत् । मुमुक्षुरूर्द्ध्वं नयेत् । मेरुलङ्घनदोषे प्रायश्चित्त मघोरसहस्रजपः । तदोषास्पर्शनायमेरुरहीनाक्षमाला कर्तव्या । एवमक्षमालायाः पादयोः पतनेऽप्यघोरसहस्रजपः । भूमौ तस्याः पतने तान्त्रिंशज्जपः । वाससि पतने तच्छतजपः । जपारंभकाले एकं पुष्पं दक्षिणहस्तस्य कनिष्ठिकामध्ये कृत्वा जप्तव्यम् । रुद्राक्षमालिकया जपेतु तद्ग्रहणे सौकर्याय दक्षिणहस्तेन गृहीतं पुष्पं वामहस्ते निधाय जप्तव्यम् । अद्रुतविळंबितसावधानजपं समर्प्य वामकरतले अस्त्रकवचहृदयान्युपर्युपरि विन्यस्य तदुपरि जपकाले धृतं पुष्पंनिधाय हृदयकवचास्त्रैस्संपुटीकृत्य अस्त्रेणसंरक्ष्य कवचेनावकुण्ठ्य दक्षिणहस्ते पुनर्गृहीत्वा हृत्प्रदेशे निधाय पूर्णचन्द्रोपमं जपं तद्गतं ध्यायन् भूनिवेशितदक्षिणजानुर्भूत्वा हां गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवति मे येनत्वत्प्रसादात् त्वयिस्थिते॥ हां हौं शिवायस्वाहा । श्रीपरमशिव जपं त्वयि निक्षिपामीति जपमर्घ्याम्बुचुळकेन साक्षतकुशपुष्पेण शिवस्य वरदहस्ते निवेदयेत् । अयं भुक्तिमुक्तिसाधकस्य स्वकृतजपस्य विस्मयसङ्कीर्तनकर्मनाशजलसंस्पर्शादिभिर्विनाशशङ्कया तत्संरक्षणाय शिवहस्तेनिक्षेपः । मन्त्रश्लोकस्यायमर्थः। गुह्यातिगुह्यादीनां मन्त्रतत्वादीनां गोप्ता त्वमेव । अतस्सर्वगोप्तृत्वा दस्माकं जपमपि गृहाण । यस्मिन्जपे त्वयिस्थिते त्वत्प्रसादादस्माकं

भुक्तिमुक्तिर्भवत्येव। तस्मान्मयि कृपया तत्गृहाणेति । ततः हां यत्किंचित्कर्म हे देव सुकृतं चैव दुष्कृतम् । तन्मेशिवपदस्थस्य भुंक्ष्व क्षपय शङ्कर ॥ हां हौं शिवाय स्वाहा । परमशिवायमे सुकृतंदुष्कृतंच निवेदयामीति सुकृतदुंष्कृतात्मकं सर्वं कर्म प्रागुक्तक्रमेण चुळकोदकेन निवेदयेत् । तत्र सुकृतजातस्य भोगार्थस्य मोक्षान्तरायपरिहारार्थस्य संरक्षणार्थं निवेदनम् । दुष्कृतजातस्यक्षपणार्थम् । अतस्सुकृतं भुंक्ष्व पालय । दुष्कृतं क्षपय नाशयेति योजना । भोगनिस्पृहस्य केवलमुमुक्षोस्तु मोक्षान्तरायपरिहारार्थं सुकृतमात्रमेव भुंक्ष्वेति पालनप्रार्थना । भोगार्थसुकृतस्य शिवपूजाया मङ्गफलत्वेनानुषंगिकस्य मानुषादिहिरण्यगर्भानन्दान्तभोगप्रापकस्य विषयेभ्यो जुगुप्समानं केवलं मुमुक्षुंप्रति 'एते वै निरयास्तात स्थानस्यपरमात्मनः' इति पुराणोक्तरीत्या नरकप्रापकस्य दुष्कृतरूपतया क्षप्रणपार्थनैव । यद्यपि पालनार्थे भुजिधातोः परस्मैपादितयाभुनक्षीतिपरस्मैपदिनाभाव्यम् । तथाऽपि मन्त्ररूपेश्लोके वैदिकमन्त्रेषु रक्षस्वेतिप्रयोगइव छान्दसोऽयं 'व्यत्ययोबहुळ'मित्यात्मनेपदप्रयोगः । यद्वा भुंक्ष्वेति भोगएवोच्यते, नतु पालनम् । सुकृतशब्देनच केवलमुक्त्यार्थिनः पूजकस्य यदनिष्टं भोगार्थसुकृतं तदेवाच्यते, नतुमुक्त्यर्थमपेक्षितम् । तद्भोगश्शिवस्यराज्ञो राजभोगवत् स्वाधीनव्यवहारः । नतु स्वयमेव भोजनम् । स्वाधीनव्यवहारश्च पूजकस्य प्रियेषु ज्ञातिषु तस्य यथाकथंचित् सुहृत्सुवानिवेशनम् । मुमुक्षोरनपेक्षितं सुकृतं शिवस्तस्य ज्ञातिसुहृद्भयः प्रयच्छतीतिश्रुतिप्रसिद्धिः । यद्यपि तस्य दुष्कृतं तद्विषद्भयः प्रयच्छतीत्यपि श्रुतिप्रसिद्धिरस्ति । तथाऽपि शिवपूजकः सर्वमष्टमूर्तेश्शिवस्य रूपं मन्यमान स्तान्नद्वेष्टीति तेन स्वदुष्कृतस्य स्वस्मिन्फलाजनकत्वरूपं क्षपणमेव प्रार्थयितुमुचितमिति तत्प्रार्थना मन्त्रे निबद्धा । ततः शिवोदाता शिवो भोक्ता शिवस्सर्वमिदं जगत् । शिवो यजति सर्वत्र यश्शिवस्सोऽहमेवतु ॥ हां हौं

शिवायस्वाहा । परमशिवमात्मानं तुभ्यं निवेदयामीति प्रागुक्तरीत्या चुळ-
कोदकेन निवेदयेत् । अत्र मन्त्रश्लोके सोहमिति भागेन स्वस्य शिवस्य
च शरीरशरीरिभावः प्रतिपाद्यते । शिवस्य नियामकत्वेन शरीरित्वात्
स्वस्य नियम्यत्वेन शरीरत्वाच्च शरीरशरीरिभावे सोऽहमिति सामानाधि-
करण्यम् । धर्मज्ञस्सुन्दरो राजेतिवत् । एवेति तदयोगव्यवच्छेदः । यश्शि-
वइति । यःपरममंगळवाची शिवशब्दः रूढ्या त्रिविधेनाप्याणवमायिककर्म-
रूपेण मलेनास्पृष्टइति 'अनादिमलसंश्लेषप्रागभावात् स्वभावतः । शिव
इत्युच्यते सद्भिश्शिवतत्वार्थ वेदिभि'रित्यादिषु प्रसिद्ध इत्यर्थः । अथवा
'शीङ्स्वप्न'इतिधातो रौणादिकेन वन्प्रत्ययान्तत्वह्रस्वत्वनिपातेन शेते सा-
मरस्येन वर्ततेऽस्मिन् कल्याणगुणजातमिति व्युत्पत्त्या परस्परविरुद्धौदार्यमा-
धुर्यविशेषज्ञत्वनिरतिशयत्वसहिष्णुत्वादिसमाश्रयणीयत्वापयोगिसकलकल्या-
णगुणरत्नाकरइति । 'नास्तियद्यदकल्याणं तत्तदस्य कदाचन । कल्याणं
सकलं चास्ति परमात्मा शिवोयतः' इत्यादिषु प्रसिद्ध इत्यर्थः । अथवा 'हिं-
सिधातोर्सिंहशब्दो वशकांतौ शिवःस्मृतः । वर्णव्यत्ययतस्सिद्धः कश्यपः
पश्यकोयथे'तिनिपातेन वष्टिशिवमिच्छतीति व्युत्पत्त्यासर्वभूतहिताशासितेति।
'समेधयति यन्नित्यं सर्वार्थानामुपक्रमे । शिवमिच्छन्मनुष्याणां तस्मादेव-
शिवःस्मृतः'इत्यादिषुप्रसिद्ध इत्यर्थः। अथवा शिवशब्दाच्छुभवाचिनः तत्क-
रोतीतिणिचि पचाद्यचि 'णेरनिटी'ति णिलोपेच सति शिवं करोति सर्वे-
षामिति व्युत्पत्त्या सकलभूतहितकर्तेति । 'समाभवंति मे सर्वे दानवाश्चा-
मराश्च ये । शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुरा' इत्यादिषु प्र-
सिद्ध इत्यर्थः । अथवा ' श्यैङ् गता'विति धातोरौणादिकेनवन्प्रत्ययस्याका-
रयकारलोपस्य च निपाताभ्यामयते प्राप्यते इति व्युत्पत्त्या भोगमोक्षार्थिभिः
भजनीयइति । 'यद्द्वारे मत्तमातङ्गा वायुवेगास्तुरङ्गमाः । पूर्णेन्दुवदना
नार्य शिवपूजाविधेः फलम् ॥ सर्वमन्यत्परित्यज्य शिव एव शिवंकरः ।

परो ध्येयोऽथ देवेश स्समासाऽऽथर्वणी श्रुति'रित्यादिषु प्रसिद्धइत्यर्थः । अ-थवा 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गा दघमाशुहंति तत्। पवित्र-कीर्ति तमलङ्घ्यशासनं भवानहोद्वेष्टि शिवं शिवेतर'इत्यादिषु सकलदुरित-हरत्वेनानुशिष्टस्य शिवशब्दस्य वाच्योयः प्रसिद्ध इत्यर्थः । शिवोयजति सर्वत्रेति । सर्वेष्वपि लोकेषु शिव एव यजति धर्माधिकारित्वेनावतिष्ठते । कर्मवश्यसकलजीवात्मकः स एव नियन्तेत्यर्थः । शिवस्सर्वमिदंजगत् । भूतभौतिकसकलजडप्रपञ्चात्मकः तन्नियामक इत्यर्थः । भोक्ता प्रपन्नानां पालयिता । दाता प्रपन्नानां प्रामादिकेपातकाद्यन्तराये सतितस्य शोधयिता । एतानि विशेषणानि शिवे स्वात्मनिवेदनतदङ्गोपयुक्तानि । तथाहि— नियम्यस्य पूजकस्य नियामकस्य शिवस्यच नियतानियम्यानियामकभावरूप-शरीरशरीरिभावेन शिवंप्रतिपूजकस्य तवाहमस्मीत्यनुसंधानमेवात्मनिवेदनम्। तदिह सोहमेवेत्यत्र तत्पदोक्तेशिवे अहंपदेन स्वशरीरकत्वं एवकारेण तद-योगव्यवच्छेदकार्थ केन तस्यानियतत्वं चानुसंधानविषयरूपं तदुपपादक मभिहितम् । अस्य चात्मनिवेदनस्य साङ्गपञ्चकत्वमाहुः— 'आनुकूल्य-स्य सङ्कल्पः प्रातिकूल्यविवर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ कार्पण्य'मिति । तत्र सर्वभूतानुकूल्याचरणतत्प्रातिकूल्यवर्जन-रूपाङ्गद्वयोपपादकं सर्वोऽपि जीववर्गः पूजकं प्रति शरण्यस्य शिवस्य शरीर मित्येतदभिहितम् । तेन प्राणिमात्रे शिवपूजकेन राजशरीरे भृत्यइवानु-कूल्येन वर्तितव्यं तत्प्रातिकूल्यं च वर्जनीयमितिलभ्यते । अत एवोक्तं वा-युसंहितायां शिवस्य मूर्त्यष्टकनिरूपणप्रकरणे— 'आत्मा तस्याष्टमी मूर्तिश्शिवस्य परमात्मनः । व्यापिकेतरमूर्तीनां विश्वं तस्मात् शिवात्म-कम् ॥ सर्वोपकारकरणं सर्वानुग्रहणं तथा । सर्वाभयप्रदानंच शिवस्या-राधनं विदुः ॥ देहिनो यस्य कस्यापि क्रियते यदि निग्रहः । अष्टमूर्ते रेनिष्टं तत्कृतमेव नसंशयः'इति ॥ रक्षिष्यतीति विश्वासेतु सर्वैरपि विशे-

षणैः उपपादकमभिहितम् । अहमेवेत्युक्तं स्वशरीरकत्वंतावत् स्वरक्षणविश्वासोपपादकम् । कोहि स्वशरीरं न रक्षेत् । शिवशब्दोक्तमुक्तविश्वासविरोधिरागद्वेषा..हेतुमलराहित्यं समाश्रयणीयत्वोपयोगि सकलकल्याणगुणशालित्वं सकलभूतहिताशंसितृत्वं सकलभूतहितकर्तृत्वं हितविरोधिसकलदुरितनिवर्तकाशिवशब्दवाच्यत्व मित्येतत्सर्वमपि तदुपपादकं'शिवोयजातिसर्वत्र शिवस्सर्वमिदंजगत्' इति विशेषणद्वयोक्तं चेतनाचेतनात्मकसकलप्रपञ्चनियन्तृत्वरूपं सर्वेश्वरत्वमपि तदुपपादकम्। सर्वेश्वरोहि तद्भक्ताभिलषितदानसमर्थ इति विश्वसितुं शक्यः । पालनार्थात् भुजिधातोः 'दैपृशोधन'इति धातोश्च ताच्छील्यार्थकत्वेन भोक्ता दातेति विशेषणद्वयेनाभिहितं भक्तरक्षकस्वभावकत्वं तदीयप्रामादिकमहापातकादिसकल दुरितनिवर्तकस्वभावकत्वञ्च तदुपपादकमिति स्पष्टमेव । गोप्तृत्ववरणेऽपि भोक्तृत्वमेवोपपादकम् । स्वयमेव रक्षकस्वभावः कथं रक्षकोभवेति प्रार्थितो नरक्षेत् । तुशब्देन देवतान्तरनिरपेक्षत्वरूपकार्पण्योपपादकं स्वस्य देवतान्तराणांच नियम्यनियामकभावराहित्यरूपन्तुशब्देनोक्तमिति विवेकः ॥

एवं त्रिभिश्चुळकोदकैर्जपक्रियात्मसमर्पणानन्तरं पञ्चब्रह्मषडङ्गमन्त्रानपि मूलमन्त्रदशांशसंयोगेन जप्त्वा शिवमष्टपुष्पिकया पुष्पाञ्जलित्रयेण चाभ्यर्च्य पुरतः कृताञ्जलिबन्धः स्थित्वा स्तोत्रमपि विज्ञापयेत् । पञ्चावरणस्तोत्रै रन्यैरपि श्रुतिस्मृतिपुराणागमादिदृष्टैः पूर्वाचार्यकृतैःस्तोत्रैर्वा यथासंभवं स्तुवीत । स्वकृतस्तोत्रं श्रुतितुल्यमिति पौराणिकाः ॥

## प्रदक्षिणविधिः ॥



एवं स्तुत्वा पुष्पाञ्जलिसमर्पणपूर्वकं साष्टाङ्गं प्रणम्य प्रदक्षिणत्रयं कृत्वा पञ्चवारं प्रणम्य पुनः प्रदक्षिणं कुर्यात् । पूजासाफल्यसिद्ध्यर्थं प्रद-

क्षिणमावश्यकम् । 'पदात्पदान्तरं गच्छेत् करौ चलनवर्जितौ । स्तुतिर्वाचा हृदिध्यानं चतुरङ्गं प्रदक्षिणम् ॥ आसन्नप्रसवा नारी तैलपूर्णं यथा घटम् । वहन्तीशानकैर्याति तथा कुर्यात् प्रदक्षिणम्' ॥ तत् प्रदक्षिणं त्रिविधम् ॥ सव्य मपसव्यं सव्यापसव्यं चेति । देवं स्वस्य दक्षिणभागेकृत्वा क्रियमाणं सव्यम् । तद्विपरीत मपसव्यम् । उभयं मिळितं सव्यापसव्यम् । त्रिविधमपि इन्द्रदिगादीन्द्रदिक्पर्यन्तं कर्तव्यम् । सव्यापसव्यं सोमसूत्रस्थानादि सोमसूत्रस्थानान्तं वा कर्तव्यम् । तत्र सव्यं ब्रह्मचारिणा मपसव्यं यतीनां सव्यापसव्यं गृहिवानप्रस्थयोरिति कश्चन पक्षः । सव्यं साधारण मपसव्यं यतीनामेव सव्यापसव्यं दीक्षिताना मेवेत्यपरः पक्षः ॥

## प्रणामविधिः ॥



प्रणामश्चतुर्विधः । अष्टाङ्गः पञ्चाङ्गस्त्र्यङ्ग एकाङ्गश्च । अष्टाङ्गो द्विविधः । दण्डप्रणामः केवलप्रणामश्च । पद्भ्यां कराभ्या मुरसा शिरसा वाचा क्रियमाणो दण्डप्रणामः । पादद्वयेन करद्वयेनोरसा शिरसा वाचा मनसा धिया दृष्ट्याच क्रियमाणो दण्डप्रणाम इति पक्षान्तरम् । अत्र मनसेत्यनन्यमनस्कत्वमुच्यते । धियेति शिवमहिमानुसन्धानरूपस्तोत्रं विविच्यत इति भेदः । पादद्वयेन जानुद्वयेन करद्वयेन उरसा शिरसा मनसा वाचा दृष्ट्याच क्रियमाण इत्यपि पक्षान्तरम् । पादद्वयेन बाहुद्वयेन उरसा शिरसा मनसा वाचा दृष्ट्याच क्रियमाण इत्यपि कश्चन पक्षः। शिरसा हस्ताभ्यां कर्णाभ्यां चिबुकेन बाहुभ्यांच भुवं संस्पृश्य क्रियमाणः केवलप्रणामोऽष्टाङ्गः । शिरसा हस्ताभ्यां जानुभ्यांच भुवं स्पृष्ट्वा क्रियमाणः पञ्चाङ्गः । शिरो हस्तौ बाहूच जानुनि निधाय क्रियमाणः पञ्चाङ्ग इति प-

क्षान्तरम् । शिरसि हस्ताभ्या मञ्जलिबन्धनं त्र्यङ्गनस्कारः । केवलं शिरसैवानमन मेकाङ्गनमस्कारः । एते प्रणामा देशकालबलाद्यपेक्षया यथा-संभवं विनियोक्तव्याः ॥

## अग्निकार्यविधिः ॥



इत्थं परमेश्वरं स्तुतिप्रदक्षिणनमस्कारै स्सन्तोष्य स्वामिन्नग्निकार्यं करोमीति विज्ञाप्य शिवादाज्ञां गृहीत्वा सामान्यार्घ्यकरोऽग्न्यगारं गत्वा नि-रीक्षणादिचतुस्संस्कारैश्शुद्धे हस्तमाने मृत्सिकतान्यतरनिर्मितेस्थण्डिले अर-णिसूर्यकान्तादिनिर्मितं श्रोत्रियागारसमाहृतं वाऽग्निं प्रज्वाल्य हुंफडन्तास्त्रेण क्रव्यादांश मग्निं निर्ऋतिकोणे निरस्य मूलेनाग्निं निरीक्ष्य हुंफडन्तास्त्रेणप्रो-क्षणताडने विधाय वौषडन्तकवचेनाभ्युक्ष्य हां हं हां वह्निमूर्तयेनम इति संहारमुद्रया वह्निचैतन्यं पूरकवायुना हृत्पुण्डरीकस्थितेन वह्निना संयोज्य तत्सहितं सुषुम्नामार्गेण द्वादशान्तं प्रापय्य परमशिवसंपृक्तं कृत्वा रेचकेन पिङ्गळया निस्सार्य हां हूं वह्निचैतन्याय नमइति तमुद्भवमुद्रया ज्वलदग्नौ निक्षिपेत् । तदनु सद्योजातादिमन्त्रैर्नमोन्तैः पञ्चभिरग्निं संपूज्य वौषडन्त-शक्तिमन्त्रेण धेनुमुद्रयाऽमृतीकृत्य कवचेनावकुण्ठ्यास्त्रेणसंरक्ष्य हृदये-नाभ्यर्च्य पारमेश्वरवीर्यमिति विभाव्य वागीश्वरीं वागीश्वरंच सम-रसावीशादिग्गतौ ध्यात्वा वागीश्वरीगर्भनाड्या मात्मसंमुखं वागीश्वरेण तद्वीर्यं क्षिप्यमाणं विभावयेत् । ततःस्वाहान्तमूलेनाहुतिपञ्चकं दत्वा हां शिवाग्नि-स्त्वं हुताशनेतिनाम कृत्वा गर्भाधानादिपञ्चसंस्कारादिसंस्कृतमग्निंविभाव्य पि-तरौ हृदाऽभ्यर्च्य विसृज्य सामान्यार्घ्यजलेन वौषडन्तकवचेन कुण्डं मेख-लांच संप्रोक्ष्य मेखलायाःदिक्षु पूर्वोत्तराग्रान्दशदर्भान्कवचेनास्तीर्य मेखला-याः पूर्वदक्षिणपश्चिमोत्तरदिक्षु ब्रह्मविष्णुरुद्रानन्तान्समभ्यर्च्य अग्न्यभ्यक्तं

रक्षतेति विज्ञाप्य । पञ्चवक्त्रयुतं रक्तं सप्तजिह्वाविराजितम् । दशहस्तं त्रिणेत्रञ्च सर्वाभरणभूषितम् ॥ रक्तवस्त्रपरीधानं पङ्कजोपरि संस्थितम् । बद्धपद्मासनासीनं दशायुधसमन्वितम् ॥ शिवाग्निं ध्यात्वा तस्योर्द्ध्ववक्त्रे कनका बहुरूपाऽतिरिक्तेति जिह्वात्रयं पूर्वादिवक्त्रेषु सुप्रभाकृष्णारक्ताहिरण्मयीति जिह्वाचतुष्टयं ध्यायेत् । ततोहामग्नयेनम इति संपूज्य हां हूमग्नये स्वाहेति तिलाहुतिपञ्चकं हुत्वा । 'अग्ने त्वमैश्वरं तेजः पावनं परमं यतः । तस्मात्त्वदीयहृत्पद्मे स्थाप्य सन्तर्पयाम्यह'मित्यग्निं विज्ञाप्याग्नेः हृदयकमले आसनमूर्तिसदाशिवावाहनपूर्वकं सर्वोपचारैस्संपूज्य अग्निवक्त्रे शिववक्त्रेसन्निधानंविभाव्य स्वाहान्तमूलेन समिदन्नाज्यलाजसर्षपतिलादिभि श्शतं तदर्धं वा यथाशक्ति हुत्वा ब्रह्माङ्गानां दशांशाहुतिं हुत्वा हौंशिवाय वौषडित्यूर्द्ध्ववक्त्रे पूर्णाहुतिं दत्वा स्वाहान्तमूलेन चरुं ग्रासत्रयपरिमितं हुत्वा ब्रह्माङ्गानामेकैकाहुतिं हुत्वाऽऽचमनं प्रदाय चन्दनतांबूलानिदत्वा भस्मपाद्याष्टपुष्पिकया संपूजयेत् । आज्याद्यभावे पत्रपुष्पादिभिर्वा जुहुयात् । ततः स्तोत्रप्रदक्षिणनमस्कारैस्सन्तोष्य पराङ्मुखार्घ्यं दत्वा शिवमुत्थाप्य लिङ्गस्थे शिवे संपूजयेत् । ततः परिस्तरणदर्भान्संगृह्याग्रमध्यमूलान्याज्यसिक्तानि कृत्वा एकं दर्भं समादाय शेषमग्रप्रभृति दहेत् । तमेकं दर्भं मग्नौ निक्षिप्य तद्भस्मना ललाटे तिलकं कुर्यात् । तद्भस्मधारण मायुश्रीकीर्तिवर्धनं विजयारोग्यकरञ्च । ततस्तस्य दक्षिणभागे चतुरश्रं मण्डलं कृत्वा मण्डलात् प्राग्भागे पूर्वाद्युत्तरान्तासु महादिक्षु रुद्रमातृगणयक्षा नीशानादिकोणेषु ग्रहासुरराक्षसनागान् मण्डलमध्ये ईशानाग्नेयनैर्ऋतकोणेषु नक्षत्रराशिविश्वदेवान् वायुवरुणदिशोर्मध्ये क्षेत्रपालञ्चाभ्यर्च्यार्घ्यं दत्वा जलमिश्रान्नेन रुद्रादिभ्यो बलिं दत्वाऽऽचमनं दद्यात् । रुद्रादीनामभ्यर्चने नमोन्तास्तत्तन्नाममन्त्राः । बलिदाने स्वाहान्ताः । क्षेत्रपालस्यैकवचन मन्ये-

षां बहुवचनमिति भेदः । ततः प्राग्भागे चतुरश्रमण्डले इन्द्रादिविष्ण्वन्तानां लोकपालानां बलिं दद्यात् । ततोमण्डपाद्बाह्यांकणे गोमयमण्डले वायसादिभ्यस्समयभेदिभ्यः स्वाहा । अग्न्यादिभ्यः स्वाहा । सर्वेभ्योग्रहवास्तुदेवेभ्यः स्वाहा । इतिपृथक्पृथक् बलिं दत्वा श्वभूतपतितप्रेतादिभ्यो ऽप्येकं बलिंदद्यात् । यद्वा— संक्षिप्य सर्वोद्देशेन 'येरुद्रारुद्रकर्माणो रौद्रस्थाननिवासिनः । ( सौम्याश्चैवतुयेकेचि तु सौम्यस्थाननिवासिनः । ) मातरो रुद्ररूपाश्च गणाना मधिपाश्च ये ॥ विघ्नभूतास्तथाऽन्येच दिग्विदिक्षु समाश्रिताः । सर्वे सुप्रीतमनसः प्रतिगृह्णन्त्विमंबलिम् ॥ सिद्धिं जुषन्तु नः क्षिप्रं भयेभ्यः पांतुमांसदे'ति मन्त्रेणैकंबलिंक्षिपेत् ॥ सर्वमिदं बलिकार्यमग्निकार्याधिकारिणैव कर्तव्यं नसर्वैः । अग्निकार्याधिकारे सत्यपि होमोपकरणवैकल्ये तदशक्तौवा होममन्त्रान् होमसङ्ख्यापेक्षया दशगुणावृत्त्या जपेत् । ततश्शिवज्ञानपूजां कुर्यात् ॥

## शिवज्ञानपूजाविधिः ॥



शिवज्ञानानि कामिकादयो दिव्यागमाः । तत्र कामिकं त्रिभेदं परार्द्धग्रन्थम् । योगजं पञ्चभेदं लक्षग्रन्थम् । सूक्ष्म मेकतन्त्रं पद्मग्रन्थम् । सहस्रं दशभेदं शङ्खग्रन्थम् । अंशुमान् द्वादशभेदं पञ्चलक्षग्रन्थम् । सुप्रभेद मेकतन्त्रं त्रिकोटिग्रन्थम् । विजयमष्टभेदं त्रिकोटिग्रन्थम् । निश्वासमष्टभेदं कोटिग्रन्थम् । स्वायम्भुवं त्रिभेदं सार्धकोटिग्रन्थम् । अनल मेकतन्त्रं त्रिंशत्सहस्रग्रन्थम् वीरतन्त्रं त्रयोदशभेदं लक्षग्रन्थम् । रौरवं षट् भेद मष्टार्बुदग्रन्थम् । मकुटं द्विभेदं लक्षग्रन्थम् । विमलं षोडशभेदं लक्षग्रन्थम् । प्रोद्गीतं षोडशभेदं त्रिलक्षग्रन्थम् । ललितं त्रिभेद मष्टसहस्रग्रन्थम् । सिद्धं चतुर्भेदं सार्धकोटिग्रन्थम् । सन्तानं सप्तभेदं षट्सहस्रग्रन्थम् । शर्वोक्तं पञ्चभेदं द्विलक्षग्रन्थम् । पारमेश्वरं सप्तभेदं

द्वादशलक्षग्रन्थम् । किरणं नवभेदं पञ्चकोटिग्रन्थम् । वातुळं द्वादश-भेदं लक्षग्रन्थम् । एवमष्टाविंशतिभेदा दिव्यागमाः । परार्धशङ्खपद्मषट्प-ञ्चाशत्सहस्राधिकैः षड्डुत्तरषष्ट्यालक्षन्यूनं पञ्चचेत्येतावत्संख्या ग्रन्थाः । तदुपभेदाः अष्टोत्तरद्विशतसङ्ख्याः । इत्थंभूतान् सर्वानपि दिव्या-गमान् यथालाभं कतिचिद्वा एकंवा तत्रापि स्वपूजोपयोगिसंहितामात्रं वा लक्षणशालिषु पुस्तकेषु लेखयेत् । पुस्तकेषु द्वाविंशत्यंगुळदीर्घं चतु-रंगुळविस्तारं पुस्तकं लक्ष्मीभद्रम् । एकविंशत्यंगुळदीर्घं त्र्यंगुळविस्तारं श्रीरक्षम् । विंशत्यंगुळदीर्घं यवहीनत्र्यंगुळविस्तारं चन्द्रकान्तम् । इदमुत्तमत्रयम् । अष्टादशांगुळदीर्घं अर्धाधिकांगुळद्वयविस्तारं नळिनम् । सप्तदशांगुळदीर्घं त्रियवाधिकांगुलत्रयविस्तारं श्रीनिवासम् । षोडशांगुळ-दीर्घं द्वियवाधिकांगुळद्वयविस्तारं श्रीभद्रम् । इदं मध्यमत्रयम्। पञ्चदशांगु-ळदीर्घं यवाधिकांगुलद्वयविस्तारं लक्ष्मीनिवासम् । चतुर्दशांगुलदीर्घ मंगुळद्वयविस्तारं उमाभद्रम् । त्रयोदशांगुळदीर्घं यवहीनांगुलद्वयवि-स्तारं वीरभद्रम् । एवंविधेषु पुस्तकेषु यजमानस्ययान्यनुकूलानि प-त्रीयचतुष्टयांशतृतीयांशयोर्मध्येमद्वयगतसुषिरवन्ति कारयित्वा यवोदरमानैः कार्पाससूत्रे राबध्नीयात् । एतेषां शिवज्ञानपुस्तकानां पूजनाय शिवस्य दक्षिणपश्चिमे वायव्यभागेवा त्रयस्त्रिंशद्धस्तप्रभृतिषु त्रिहस्तपर्यन्तेषु परि-माणेष्वन्यतमपरिमाणवद्विद्याकोशगृहं कृत्वा सुगन्धिचन्दनाद्यनुलिप्तभित्ति-कस्य तस्य मध्ये नागदन्तादिरचितं सुवर्णरेखादिचित्रितं विद्यासिंहासनं निधाय तत्र दुकूलादिकमास्तीर्य तन्मध्ये स्वर्णरूप्यताम्रकांस्यारकूटलोह-दारु वेणुविदळिकादिकृतां विद्यारत्नकरण्डरूपां मञ्जूषां निधाय तस्यां पुस्तकानि निदध्यात् । तेषु 'सर्वेभ्यश्शिवज्ञानेभ्योनमः' इति गन्धपुष्पधूप-दीपनैवेद्यैस्संपूज्य ॥ 'सर्वज्ञानप्रदं शम्भुं सर्वाज्ञानविघातकम् । कायेन मनसा वाचा विद्यापीठाश्रयंभजे' इति स्तुत्वा नमस्कुर्यात् । पुस्तकालाभे

चतुरश्रमण्डले अष्टदळपद्मं तदावारक मष्टादशदळपद्मंच लिखित्वा कार्णि-कायां हौं शिवायनमः । हां वागीशायनमः । इति वागीश्वरसहितं शिवं संपूज्य पूर्वादिषु दशसु दळेषु कामिकादीन् सुप्रभेदान्तान् शिवेना-धिकरणान्तरानिरपेक्षेण साक्षान्निर्मिततया शैवसंज्ञान् दिव्यागमान् संपूज्य अष्टादशसु दळेषु विजयादिवातुळान्तान् अनादिरुद्राद्यधिकरणेन शिवेन निर्मिततया रौद्रसंज्ञान् पूजयेत् । अथ गुरुं स्वपीठस्थं गत्वा तस्य पादौ प्रक्षाळ्य शिवबुद्ध्या गन्धादिभिस्संपूज्य पुष्पाञ्जलित्रयं कृत्वा साष्टाङ्गं त्रिः प्रणम्योत्थाय भूमौ जानुनी न्यस्य कृताञ्जलिपुटः क्षमस्वेति ब्रूयात् । यदि 'मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पं वनान्तरे । ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्' इति शास्त्र मनुसृत्याधिकज्ञानार्थ मन्यं गुरु माश्रयति, तथाऽपि पूर्वगुरुमपि यथापूर्वं पूजयेत् । ततश्शिवसमीपमागत्याष्टपुष्पि-कया शिवं संपूज्य विशेषार्घ्यं दत्वा प्रणामपुरस्सर मभितः प्रार्थनां कृत्वा 'न्यूनं वाऽप्यधिकं वाऽपि यन्मया मोहतः कृतम् । सर्वं तदस्तु संपूर्णं त्वत्प्रसादात् प्रभोममे'ति संप्रार्थ्य । 'अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षन्तव्यं भक्तवत्सल ॥ स्वामिन्क्षुद्रेण दासेन मलीमसधिया मया । कदर्थितो वायद्भक्तिवशात् प्रीतः क्षमस्वत' दिति विज्ञापयेत् । ततस्सद्योजातादिक्रमेण पञ्चसुशिरस्सुशिवमभ्यर्च्या-स्त्रादिहृदयान्तान्यंगानिच प्रातिलोम्येन संपूज्य पूर्ववद्यथेष्टमूर्द्धमुखोभवेति संप्रार्थ्य हां हौं शिवाय साङ्गाय पराङ्मुखार्घ्यं स्वाहेति पराङ्मुखार्घ्यं दत्वा स-द्यादीनि ब्रह्माण्यस्त्रादीन्यङ्गानिच गर्भावरणरूपाणि देवस्यांगेषु योजयेत् । अन्येभ्योऽपि तत्तदावरणदेवेभ्यः पराङ्मुखार्घ्यं दद्यात् । हुंफडन्तास्त्रेण करद्वयांगुष्ठतर्जन्यग्राभ्या मूर्द्ध्नि पुष्पं प्रक्षिपन्नाराचमुद्रया मन्त्रानुत्थाप्य हां हं हां शिवमूर्तयेनमः । इतिदिव्यमुद्रया शिवस्य हृदयस्थाने संयोज्य तेषां

तत्र लयं विभावयेत् । तदनु गुरुगृह विद्यापीठ सप्तगुरु महालक्ष्मी गणपति द्वारपालेभ्योऽपि पराङ्मुखार्घ्यं दत्वा स्वस्वमन्त्रेणतान्विसर्जयेत्। ततः परिवारदेवेभ्योपि पराङ्मुखार्घ्यंदत्वा प्रत्येकं सपुष्पैर्वस्त्रै राच्छाद्य अस्त्रमन्त्रेण पेटकस्य पार्श्वेषु निदध्यात् । ततश्शिवमन्त्रं समुच्चार्य पद्मपीठाल्लिङ्गमादाय दुकूलादिभिस्संवेष्ट्य पेटकमध्ये विन्यस्य भीमरुद्रं स्मरन् रक्षेति शिवाज्ञां विज्ञाप्य पिधानं कुर्यात् । ततः मिश्रपूजां कुर्यात् । प्रागकृतचण्डपूज शिवस्योद्वासनानन्तर मावाहनादिसर्वोपचारसहितां चण्डपूजां कुर्यात् ॥

इत्थं प्रातर्मध्याह्नसायार्धरात्रिषु प्रातरादिषुकालेषु वा प्रातरादिकालद्वये वा प्रातःकालमात्रेवा घटिकात्रयेण पूजा कर्तव्या । संक्रान्त्युपरागाष्टमीचतुर्दश्यादिव्यतिरिक्तकालेषु बुभूक्षुणा रात्रौ पूजा वर्जनीया । तेनापि त्रिकालपूजा क्रियतेचे दस्तमयं समारभ्य घटिकात्रयमध्ये सायङ्कालपूजा समापनीया । मुमुक्षोस्तु नकालनियमः । यद्वा बुभुक्षोरपि न कालनियमः । यथासंभवकाले तु यथासंभवनाडिकाः । 'आत्मार्थयजनं कुर्या द्यथाशक्त्यनुरोधत' इत्यप्यागमदर्शनात् । एवं प्रपञ्चोपचारान् कर्तुमशक्नुवन् षोडश पञ्चोपचारान्कुर्यात्। आवाहनासन पाद्यार्घ्याचमनस्नान वस्त्रोपवीत गन्धपुष्प धूपदीप नैवेद्य मुखवास स्तोत्रसहितप्रणामप्रदक्षिणसहितविसर्जनानि षोडशोपाचराः । यद्वा— आसनावाहन पाद्याचमनार्घ्यस्नान वस्त्र गन्धपुष्प नैवेद्य तांबूल धूपदीपारात्रिक भस्म चुळकोदकानि षोडशोपचाराः । आवाहनासन पाद्याचमनार्घ्य स्नान वस्त्र–गन्धपुष्पनैवेद्यानि दशोपचाराः । गन्धपुष्पधूपदीपनैवेद्यानि पञ्चोपचाराः। यद्यपि 'पार्थिवं गन्धपुष्पाद्यं कन्दमूलफलादिकम् । आप्यं वारि पयो वस्त्रं दधि गोमूत्रकादिकम् ॥ आग्नेयं हेमरत्नादि दीपमाभरणादिकम् । वायव्यं चामरं धूपं व्यजनं ताळवृन्तकम् ॥ नाभसं गेयवाद्याद्यं वीणावेणुस्वना-

दिकम् । एते पञ्चोपचारास्तु कथिता श्शास्त्रवेदिभि'रिति पञ्चोपचाराः प्रपञ्चेन दर्शिताः । अथाप्यशक्तानां गन्धादिनैवेद्यान्तोपचारा एव क्रमात् पार्थिव नाभस वायव्य तैजसाप्याः पञ्चोपचाराः । सर्वोपचाराश्शिवस्यावाहनवत् निश्वासोछ्वासरूपचन्द्रार्कगतिनिरोधेन कर्तव्याः इत्यागमप्रसिद्धेः केषुचि दुपचारेषु मात्रागणनेन कालनियमोऽप्यागमेषु दर्शितः। आवाहने द्वादश मात्राः । पाद्ये पञ्च । आचमने तिस्रः । अर्घ्ये एकम् । गन्धे षट् । धूपे द्वादश । दीपे षट् । नैवेद्ये चतुर्विंशतिः । आरात्रिके सप्त । नीराजने षोडश । भस्मार्पणे सप्त । छत्रे पञ्च । चामरे दश । व्यजने तिस्रइति । एवं चन्द्रार्कगतिनिरोधेन क्रियमाणेषूपचारेषु तत्तन्मन्त्राः मनसैव जप्तव्याः । मन्त्राश्च प्रासाद शिवमन्त्र पञ्चब्रह्म षडङ्गरूपा स्तत्तदुपचारेषु यथाविधि विनियोक्तव्याः । तत्रावाहनपाद्य वस्त्र विलेपनभूषणदर्पणच्छत्रचामर तालवृन्त जपस्तोत्र नमस्कारेष्वन्येषुचविशेषोक्तिरहितेषूपचारेषु मन्त्रान्ते नमश्शब्दः । अर्घ्यस्नानधूपदीपनैवेद्यपानीयमुखवासनीराजनपवित्रजपपूजासमर्पणेषु स्वाहाशब्दः । मार्जन सेचन पुष्पपूर्णाहुतिषु वौषट्शब्दः। मलस्नानशोधन पाशच्छेदन प्रोक्षण ताडनभेदन विघ्ननिवारणेषु हुंफट्शब्दः । रक्षायां फट्शब्दः । आचमनेस्वधाशब्दः । एवमुक्तनियमैः पञ्चोपचारानपि कर्तुमशक्तः केवल मष्टपुष्पिकयाऽर्चयेत् । 'आसने प्रथमं पुष्पं दातव्यं शुद्धचेतसा । मूर्तिध्यानं हृदा कार्यं पुष्पेणैवापरेणतु ॥ पञ्चपुष्पप्रदानेन पञ्चाङ्गानि प्रकल्पयेत् । शिवं तथाऽष्टमेनैव कथिताचाष्टपुष्पिका' । पञ्चाङ्गानि मूर्धादीनि पञ्चब्रह्माणि नेत्रवर्जितानि हृदयादीनि वा । 'एतानि चाष्टपुष्पाणि सर्वसाधारणानि तु । सर्वसिद्धिप्रदानीह तथा सर्वाश्रमेषु च॥ सर्वेषां चैव वर्णानां सर्वसाधारणानि च। एककालं द्विकालं वा त्रिकालं वा प्रपूजयेत् ॥ प्रातर्मध्याह्नसमये तथा

चास्तमिते रवौ । पूजयेत्परया भक्त्या अष्टपुष्पविधानतः ॥ दरिद्राणा मनाथानां बालस्त्रीबालिशेषु च । भोगिनां व्याधिजुष्टानां तथा ध्यानार्पितात्मनाम् ॥ शिवशास्त्रानुरक्तानां नानासिद्धिहितात्मनाम् । अनुरक्तविरक्तानां कथितासाऽष्टपुष्पिका' इति कालोत्तरवचनात् । भोगो राज्यपरिपालनम् । तद्वन्तो भोगिनः । तेषां राज्यपरिपालनं कुर्वतामित्यर्थः । राज्यपरिपालनेन बहुषु शिवस्थानेषु शिवभक्तानां गृहेषुचशिवपूजाप्रवर्तनेन बहुपुण्यं लभ्यते । शिवशास्त्रानुरक्तानां तद्व्याख्यानतदध्ययननिरतानामित्यर्थः । शिवशास्त्रव्याख्यानेन हि लोके यथावत् शिवपूजाप्रवर्तनेन बहु पुण्यं लभ्यते । तदध्ययनेन चाग्रे स्वयं यथावद्बहुकालपूजनेन बहुपुण्यं लभ्यतइति ॥

## कपिलापूजाविधिः ॥

इति शिवपूजां समाप्य कपिलापूजां कुर्यात् । यथा कपिलां गां नन्दा सुभद्रासुरभि सुशीला सुमनस्संज्ञां पञ्चगोत्ररूपायै कपिलायैनमइति गन्धपुष्पादिभिरभ्यर्च्य 'सौरभेयि जगन्मात देवाना ममृतप्रदे । गृहाण वरदे ग्रास मीप्सितार्थं च देहि मे' इति ग्रासं दत्वा 'वन्दिताऽसि वासिष्ठेन विश्वामित्रेण जह्नुना । कपिले हरमे पापं यन्मया दुष्कृतं कृत'मिति संप्रार्थ्य 'गावो ममाग्रतो नित्यं गावः पृष्ठत एव मे । गावो मे हृदयेचापि गवां मध्ये वसाम्यह' मिति जपेत् । एतं नरो जपेन्मन्त्री त्रिसंध्यं नियतश्शुचिः । विमुक्तस्सर्वपापेभ्य श्शिवलोकं प्रपद्यते ॥

## परार्थालयदर्शनम् ॥

ततः परार्थालयसमीपस्थःपूजान्ते शिवालयं गत्वा तत्सेवामपि कुर्यात्।

तत्रायं क्रमः— देवालयसमीपं गत्वा गोपुरद्वारबाह्ये वा बलिपीठस्य बाह्ये वा स्थूललिङ्गात्मकस्य विमानस्य नमस्कारं कुर्यात् । ततो भद्रलिङ्गस्य बलिपीठस्य ध्वजस्तम्भस्य वृषभस्यापि नमस्कारं कृत्वा । (श्लो) 'अन्तः प्रवेशे शिवदर्शनेच शिवार्चनेतत्फलसिद्धिलाभे । देह्यभ्यनुज्ञां भगवन् प्रसन्न स्त्वत्पादपद्मप्रणतायमह्य'मिति वृषभं संप्रार्थ्य बलिपीठाग्रदेशे साष्टाङ्गं शिवं प्रणमेत् । देहं वस्त्रेणाच्छाद्य नप्रणमेत् । शिवस्याग्रपृष्ठ वामभाग गर्भगृहेषु च नप्रणमेत् । प्रत्यङ्मुखे चोत्तरादिङ्मुखेच लिङ्गे वामभागे प्रणमेत्। प्रणम्यच देवस्य पुरतः पुष्पाञ्जलिं क्षिपेत्। ततः प्रदक्षिणंकुर्यात्। गर्भगृहेप्रदक्षिण मर्चकस्यैव। अन्तर्मण्डले प्रदक्षिणं दीक्षितानामेव। अन्तर्हारादिषु सर्वेषाम्। तत्रान्तर्हारे प्रदक्षिण मेकगुणम्। मध्यहारेत्रिगुणम्। मर्यादायांचतुर्गुणं।महामर्यादायां पञ्चगुणं।क्षेत्रावधौषड्गुणं।एवंबलकालाधिकारानुरूपेप्रदेशे एकविंशतिपञ्चदशवा सप्तवापञ्चवात्रीणिवा प्रदक्षिणानिकुर्यात्। अत्यन्तमनवसरे एकंप्रदक्षिणंवा कुर्यात्। एवंप्रदक्षिणंकुर्वन् गर्भगृहेन्तर्मण्डलेच संभावितं सोमसूत्रलङ्घनं नकुर्यात्। तल्लङ्घनवर्जनार्थं गर्भगेहे सोमसूत्रप्रभृति सव्यापसव्यमेव कर्तव्यम् । ततोबहि रन्तर्मण्डलमात्रे सव्यापसव्यम् । तत्रैन्द्रादि सोमसूत्रादि वा कार्यमिति प्रागुक्तम् । प्रदोषेतु वृषादिचण्डनाथान्तं वृषभं सोमसूत्रकम् । पुनर्वृषं चण्डनाथं नाळदेशस्य पार्श्वतः ॥ पुनः प्रयाया च्चण्डञ्च तथैव वृषपृष्ठकम् । एवं सव्यापसव्यंतु प्रदक्षिण मिहोच्यते ॥ आद्यन्तं वृषदेवस्य चतुस्स्थान मुदाहृतम् । त्रिचण्डस्थानसंयुक्तं द्विस्थानं सोमसूत्रक'मित्युक्तप्रकारेण कर्तव्यम् । सोमसूत्रंच प्रासादाद्बहिर्नाळप्रदेशे प्रासादविस्तारमानं तदर्धमानं वा । तस्य लङ्घने दोषः । सूत्राद्बहिर्लंघनेतु नदोषः ॥ तदभ्यन्तरेऽपि सङ्कटे तृणादिक मन्तर्धाय लङ्घनीयम् । तृणैः काष्ठै स्तथा पर्णैः पाषाणै र्लोष्टकादिभिः । अन्तर्धानं पुनः कृत्वा सोमसूत्रं तु लङ्घयेत्' इतिवचनात् । क-

चिदपसव्यस्य निषेधो दृश्यते । 'सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम् । अपसव्यं नकुर्वीत कुर्यादेव प्रदक्षिण'मिति ॥ ततो द्वारपालं नन्दिकेश्वरं च नमस्कृत्य तत्तदनुज्ञयाऽन्तः प्रविश्य विघ्नराजं पुष्पाञ्जलिविकिरण मस्तकाहतिपूर्वकं नमस्कृत्य मण्डपं प्रविश्य देवदेवं नमस्कृत्य मस्तके हृदये वाऽञ्जलिं बद्ध्वा यथाधिकारं वैदिकागमिक पौराणिक लौकिक द्राविडादिस्तोत्रैः स्तुवीत । तत्राचार्यस्यैव गर्भगृहं प्रविश्य सेवा । इतरेषां ब्राह्मणाना मर्धमण्डपं प्रविश्य । क्षत्रियाणा मर्धमण्डपद्वारमुखेऽवस्थाय । वैश्यानां वृषाग्रे । शूद्राणां वृषपृष्ठे । वैश्यशूद्राणां वृषाग्रे वृषपृष्ठेच गोमयेन चतुरश्रमण्डलं कृत्वा तत्रैव पुष्पाञ्जलिर्दातव्यः। एवं नृत्तमूर्त्यादीनामपिपुष्पोप्रहारपूर्वकं प्रणामः कार्यः । एवं प्रणामानन्तरं चण्डेश्वरं प्रणमेत् । इत्थं पीठादिचण्डान्तनमस्कारानन्तरं देवालये संभाविताना मपराधानां क्षाळनाय देवस्य सन्निधौ यथाशक्ति देवस्यमूलमन्त्रं जप्त्वा देवस्य पृष्ठीकरणं विना निर्गच्छेत् । अपराधाश्च शिवालयमध्ये वाहनारोहण सोपानहसंचारगोपुरप्रतिमाच्छायालंघन निर्माल्यस्पर्श तल्लङ्घन शिवबलिपीठमध्यसञ्चार प्रमदास्पर्श रागपूर्वकतद्वीक्षण वृथाहास गानभाषण सोत्तरीयप्रदक्षिणनमस्कारैकहस्तनमस्कार वामभागादिनमस्काराकालनमस्कारप्रभृतयः । एतेषु संभावितान् वर्जनीयानपराधान् क्षमाप्य निर्गच्छेत् । एवं शिवं सेवमानेन ग्रामभूषणादिपत्रपुष्पपर्यन्तेन द्रव्येणवा संमार्जनादिना शरीरव्यापारेण वा देवालयोपकारपर्यवासायिवाङ्मात्रेणवा कैङ्कर्यं कृत्वैवसेवनीयम् । प्रतिदिनं सेवाया मशक्तश्चेत् अष्टम्यादिषु सेवेत । अष्टम्यामष्टभिर्दिवसैः पर्वणि पक्षेण संक्रान्तौ मासेनच कृतस्य पापस्य क्षयः । प्रदोषे त्रिविधकरणार्जितानां महत्तराणामपि पापानां क्षयः । विषुवायनोपरागमहोत्सवादिषु सेवया शिवपदप्राप्तिः । ततः गृहमागत्य यथावसरं स्वल्पमात्रं वा सिद्धान्तशास्त्रश्रवणं तदभ्यासंवा दीक्षितैरसहादीक्षितसन्निधिं परिहृत्य कु-

र्यात् । 'नप्रकाश्यमिदं ज्ञान ममक्तानां वरानने । रक्षणीयं प्रयत्नेन तस्करेभ्यो यथाधन'मिति वचनात् । अथ मध्याह्नसमये प्रपञ्चेन संकोचेनाष्टपुष्पिकामात्रेण वा पूजयेत् । कुतश्चिद्वैकल्यात् परिगृहीतलिङ्गार्चनालाभे तुल्यानुष्ठायिना परेणार्चिते लिङ्गे संक्षेपेणाष्टपुष्पिकामात्रं कुर्यात् । 'प्रणवो मातृका माया व्योमव्यापी षडक्षरम् । प्रासादोऽघोरमन्त्रश्च सप्त साधारणामताः'॥ एवं यथाकथंचित् शिवमभ्यर्च्य काले भोक्तुमिच्छन् सर्वस्मादपि पाकादग्रमुद्धृत्य तदर्धं शिवाय निवेद्य अर्धेन यथाधिकारं वैदिकं शैवं च होमं कुर्यात् । वैदिको वैश्वदेवहोमः । शैवः चुल्लीहोमः ॥

## चुल्लीहोमः ॥

तस्यायं क्रमः । (१) चुल्लीं निरीक्षणादिभिस्संशोद्ध्य तत्राग्निं पूरककुंभकाभ्यां बिन्दुनाभिस्थानाभ्यां सहैकीकृत्य भौतिकबैन्दवजाठराग्नित्रयं रेचकेन निस्सार्य पिङ्गळया चुल्लिकाग्नौ निक्षिप्य तदनन्तरं अग्नये नमः । सोमाय नमः । सूर्याय नमः । बृहस्पतये नमः । प्रजापतये नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो विश्वेभ्यो नमः । अग्नये स्विष्टकृते नमः । इत्यग्नावाग्नेयादिपूर्वान्तमग्नयादीन् संपूज्यस्वाहान्तैस्तत्तन्मन्त्रैर्हुत्वा तान्विसर्जयेत् ॥

## निर्माल्यभोजनम् ॥

ततो निवेदितं तच्छेषं वा भुंजीत । शिवनिवेदितभोजने फलवचनानि बहूनि श्रूयन्ते— 'मदीयभुक्तनिर्माल्यं पादांबु कुसुमं दळम् । धर्ममर्थंच कामञ्च मोक्षं च ददते क्रमात्'इति ॥ तन्निषेधवचनान्यपि श्रूयन्ते 'नधारयेत् कचिच्छंभो निर्माल्यं नच भक्षये'दित्यादीनि । एतेषां शिवदीक्षासहित तद्रहितविषयत्वेन व्यवस्था । 'निर्माल्यं निर्मलं शुद्धं निर्मलत्वा

१. बुद्धिमिति पाठभेदः ।

दनिन्दितम् । तस्मादभोज्यं निर्माल्य मशुद्धै रशिवात्मकैः ॥ जिह्वाचाप-स्थसंयुक्त शिवसंस्कारवर्जितः । शिवनिर्माल्यभोजी चेत् रौरवं नरकं व्रजे' दिति शिवपुराणवचनादिति केचित् । कामिकादिसिद्धान्ततन्त्रेषु दीक्षितानामेव समयाचारविधानेन 'निर्माल्यं नचभुञ्जीते'ति ' शिवभक्ताश्च न निन्दये'दित्यादीनि निषेधवचनानि 'निर्माल्यभक्षणेऽघोरं प्रमादादयुतं जपे'दिति प्रायश्चित्तविधानानि च श्रूयन्ते । अतः 'स्वाद्यानिचादनीयानि पेयान्यन्यानि यानि च । देयानि तानि वै शंभो रश्नीयाद्दासभावतः' इत्यादिपुराणवचनानि वैदिकपौराणिकपाशुपतादिविहित शिवसंस्कारेण ये दीक्षितास्तेषामेव शिवनिर्माल्यं ग्राह्यम् । नतु कामिकादिसिद्धान्ततन्त्रेण दीक्षितानामिति केचित् । कामिक एव—'अशुद्धात्माऽशुचिर्लोभान्मद्भुक्तं पावनं परम् । भक्षयन्नाशमाप्नोति रसभोक्ता यथाद्विजः ॥ मल्लिङ्गधारिणो लोके देशिका मत्परायणाः। मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु' इति वचनात्, ' उपवाससहस्राणि प्राजापत्यशतानिच । शिवप्रसादसिद्धस्य कोटयंशेनापि नोसमाः' इत्यादिवातुळागमप्रभृतिवचनदर्शनाच्च । सिद्धान्ततन्त्रे दीक्षितानामपि शिवनिवेदितं प्रशस्तमेव । शिवनिर्माल्यनिषेध-प्रायश्चित्तवचनानि तु ' देवस्वं देवताद्रव्यं नैवेद्यंच निवेदितम् । चण्डभुक्तबहिःक्षिप्त'मिति पञ्चविधनिर्माल्यविषयाणि। कामिके 'देवस्वं देवताद्रव्यं नैवेद्यंच निवेदितम् । चण्डद्रव्यञ्च निर्माल्यं निर्माल्यं षड्विधं भवेत् ॥ ग्रामादीशस्य देवस्वं देवद्रव्यं पटादिकम्। नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं निवेदितम् ॥ चण्डद्रव्यंतु तद्दत्तं निर्माल्यं प्रेरितं बहि'रिति निर्माल्य-षाड्विध्य निर्माल्योपभोगदोषसंकीर्तन तत्प्रायश्चित्तोपदेशानन्तरमेव निवेदिताख्यनिर्माल्यस्वीकारानुमत्यर्थं 'मशुद्धात्माऽशुचिर्लोभा'दित्यादिसार्धश्लोकद्वयस्य पठितत्वात् । एवञ्च सिद्धान्ततन्त्रेषु शिवनिवेदितनिषेधवचनानि

तदुक्तशिवदीक्षारहितविषयाणीत्यपरे ॥ सुप्रभेदे— 'सदाशिवस्य निर्माल्यं मनुष्याणां नभोजनम् । पशूनांच गजानांच जलेवाऽथ विनिक्षिपेत्॥ अथवा वह्निना दद्याद्भूमौवा खातयेद्बुधः' इति सदाशिवनिर्माल्यस्य मनुष्यमात्रसाधारण्येनाभोज्यत्वं प्रतिपाद्य तस्यभूवन्हिगोगजादिष्वेव प्रतिपत्तिवर्णनाच्च सदाशिवनिर्माल्यं दीक्षितानामप्यभोज्यमेव । तेषां शिवनिर्माल्यं प्रशस्तमिति वचनानि तु सकळनिर्माल्यविषयाणि । ' प्रतिमासु च सर्वासु न चण्डोऽधिकृतोभवे'दिति सकळेषु चण्डाधिकारनिषेधात् । कारणे'सकळानांच नैवेद्यं सर्वेषां भोजनं भवे'दिति सकळनैवेद्यानुमतिवर्णनात् । तदपि शिवदीक्षितैस्तत्परिचारकै रेव भोक्तव्यम् । सुप्रभेदे—'सदाशिवस्य निर्माल्य'मित्याद्युक्त्यनन्तरं'सकळानां तु निर्माल्यं परिचारकभोजनम् । तदप्यन्यजनानां तु भोजने दोषकृद्भवेत्'इत्युक्तत्वादित्यपरे । सदाशिवनिर्माल्येष्वपि मनुष्यादिस्थापितशिवलिङ्गार्पितेष्वेव निषेधः । नतु चरलिङ्गादिषु । तेषु चण्डाधिकाराभावात्। 'बाणलिङ्गे चरे लोहे रत्नलिङ्गे स्वयंभुवि । प्रतिमासुच सर्वासु नचण्डोऽधिकृतो भवेत् ॥ लिङ्गेस्वायंभुवेबाणे रत्नजेरसनिर्मिते । सिद्धप्रतिष्ठितेलिङ्गे न चण्डोधिकृतोभवेत्' इति च वचनादित्येके । चललिङ्गादिषु चण्डाधिकारो नास्तीति वचनानि वैदिकपौराणिक वामदक्षिणतन्त्रादिविषयाणि । नतु कामिकादिसिद्धान्तविषयाणि । 'स्थिरेचरे तथा रत्ने मृद्दारौशैलकल्पिते । लोहचित्रमये बाणे स्थितश्चण्डोनियामकः ॥ सिद्धान्ते नेतरे तन्त्रे नवामे नच दक्षिणे'इति ॥ 'अव्यक्तव्यक्तलिङ्गेषु मण्डले स्थण्डिलेऽनले । चरे स्थिरे तथा रत्ने मणिचित्रादिके तथा ॥ गन्धान्नसंभवे लिङ्गे मृद्रसफलकल्पिते । तथा पुष्पमये लिङ्गे चण्डपूजा नियामिके'ति च कालोत्तरादिषु विशेषदर्शनात् । अतो निर्माल्यविधिनिषेधयोश्चरस्थिरादिविषयत्वेननव्यवस्था । किन्तु निर्माल्यविशेषविषयत्वेन । 'तांबूलं भस्म तैलं च गन्धपुष्प मधूपकम् । फलादि भक्षणद्रव्यं निर्माल्य-

मिति नोच्यते'इति वचनादितिकेचित् । कामिके—'स्वेष्टलिङ्गे च यद्दत्तं चरुवत्तन्न संशयः । नैवेद्यं भ्रातृपुत्राणां भगिनीनां च दापये'दिति चरुदृष्टान्तवचनात् । कारणे—'स्फाटिकं बाणलिङ्गञ्च स्थापितं चरमेव वा । तन्निवेदितनिर्माल्यं न निर्माल्यं प्रकल्पयेत् ॥ बालानां युवतीनांच भोजनं बलवर्द्धन'मित्यनिर्माल्यत्वप्रतिपादनाच्च चरलिङ्गादिनिवेदितान्नमपि भोज्यमेव । किन्तु पूजकस्य न भोज्यम् । 'नैवेद्यं भ्रातृपुत्राणा'मित्यादिविशेषवचनात् । तांबूलादिमात्रस्य ग्राह्यत्ववचनंतु मनुष्यादिस्थापितलिङ्गविषयमित्यपिकेचित् । 'नैवेद्यं कल्पयित्वातु शिवायेतितदूर्ध्वतः । निवेद्यं मह्यमुच्छिष्टं भुङ्क्ते प्रत्यहमादरात् ॥ सोऽयं मत्सदृशः प्रोक्तः चरुद्रव्यस्तथाभवे'दिति कामिके निवेदनकर्तुरपि तदुच्छिष्टभोजनप्रतिपादनात्पूजकस्यापि शिवनिवेदितं भोज्यमेव । तस्य निवेदितभोजननिषेधवचनानितु संहाररुद्रादिनिवेदितविषयत्वेनयोज्यानीत्यपि केचनवदंति । सदाशिवमूर्तौ परमाशिवावाहनपुरस्सरं तत्पूजानिरूपणावसानएव तन्निवेदितनिषेधस्यदिव्यागमेषुबहुशश्रवणात् विधिनिषेधसहस्रशबळितं सर्वविधमपि शिवनिर्माल्यंवर्जनीयमित्येवयुक्तम् । 'श्रूयतेचमहान्दोषःश्रूयतेच महाफलम् । फलं तत्रपरित्याज्यंदोषोहिबलवत्तर' इति वचनात् । नचकामिके—'पत्रंपुष्पं फलं तोयमन्नं पाद्यमथौषधम् । अनिवेद्य नभुञ्जीत भगवन्तं सदाशिव'मित्यनिवेदितभोजनेऽपि निषेधःश्रूयते इति वाच्यम् । तस्यातिथिसत्काररहितभोजननिषेधव त्तच्छेषभोजनविधिपरत्वसंभवात्, 'अन्नाद्य मौषधं तोयं पत्रं पुष्पं फलादिकम् । शिवाय दत्वातच्छेषं भोज्यं भुञ्जीत बुद्धिमा'निति सिद्धान्तशेखरे तथैवप्रतिपादनाच्चेत्येवमितरेवर्णयन्ति ।✓एवं निर्माल्यविधिनिषेधवचनानां विचारे नव पक्षास्संपन्नाः । शिवसंस्काररूपदीक्षावतामेव शिवनिर्माल्यानुमतिरन्येषान्तन्निषेध इत्याद्यः पक्षः । शिवसंस्कारवत्स्वपि वैदिकदीक्षावतामेवात्याश्रमिप्रभृतीनांतदनुमतिः, नतुकामिकादिसिद्धान्ततन्त्रो-

क्तदीक्षावतां तन्निषेधतद्गक्षणप्रायश्चित्तविधानदर्शनादिति द्वितीयः पक्षः । निवेदितव्यतिरिक्तपश्चविधनिर्माल्यविषय एव निषेधप्रायश्चित्तोपदेशः । निवेदितं तु तेषामपि ग्राह्यमिति तृतीयः पक्षः । निवेदितमद्धेऽपि शिवलिङ्गनिवेदितनिषेधात् सकळनिवेदितमेव ग्राह्यमिति चतुर्थः पक्षः । शिवलिङ्गनिवेदितं न सर्वनिषिद्धं, किन्तु मनुष्यादिप्रतिष्ठापित स्थिरलिङ्गनिवेदितमेव । चरलिङ्गादिनिवेदितन्तुग्राह्यम् । तत्र चण्डाधिकाराभावादिति पञ्चमः पक्षः । कामिकादिगत निवेदितनिषेधतदनुमतिवचनानां स्थिरचरादिविषयतया न व्यवस्था, कामिकादिसिद्धान्तमार्गे चरादिपूजायामपि चण्डसद्भावात्।किन्तु अन्नादिविषयो निषेधः। फलापूपतांबूलादिविषयाऽनुमतिरिति व्यवस्था। तदितरेषुविशेषवचनसद्भावादितिषष्ठःपक्षः। चरलिङ्गादिनिवेदितमन्नादिकमपिग्राह्यमेव । किन्तु भ्रात्रादिभ्योदेयं, नतु पूजकेनभोक्तव्यमिति सप्तमःपक्षः। शिवार्पणबुद्ध्याशिवनिवेदितं पूजकेनापि भोज्यमित्यष्टमः पक्षः। फलनिषेधवचनयोर्निषेधवचनस्य बलीयस्त्वात् सर्वस्यापिशिवनिर्माल्यस्यवर्जनमेव युक्तमिति नवमःपक्षः॥ एतेषु नवमःपक्षस्तावदत्यन्तमयुक्तः। शिवनिर्माल्यस्वीकारे महाफलप्रतिपादकानां बहूनां दिव्यागमपुराणादिवचसा मप्रामाण्यप्रसङ्गात् । नह्यार्षेषु वचनेषु वर्णमात्रमप्यप्रामाण्यं सहते । नितरां शिववाक्येषु । येष्वर्थवादकतया प्रामाण्योपपादनमपि महते प्रत्यवायायेति सर्वदिव्यागमघण्टाघोषः । ‘श्रूयतेच महान्दोष’इत्यादि वचनं तु यत्र विधिनिषेधयोरुभयोरप्यन्यत्रप्रामाण्यावकाशः तत्र तयोः द्वयोः क्वचिन्मेळने निषेधोबलीयानित्येतत्परम् । यथाद्वादश्यामामलकप्राशस्त्यवचनप्रामाण्य मर्कवारमेळनरहितद्वादश्यां सावकाशं अर्कवारे तन्निषेधवचनप्रामाण्यं द्वादशीमेळनरहितेऽर्कवारे सावकाशम् । द्वादश्यर्कवारमेळने सत्यामामलकफलनिषेधवचनद्वयप्राप्तौ निषेधवचनं बलीय इति । फलवचनानां सर्वथैवाप्रामाण्योपपादकं निषेधवचनानां बलीयस्त्वंतु प्रा-

माणिका नाद्रियन्ते । अतो विधिनिषेधवचनानां विषयव्यवस्थाप्रदर्शन-मेव युक्तम् ॥

(श्लो) तां तु प्रदर्शयिष्यामः पूर्वदर्शितवर्त्मना । सर्वागमा-विरोधेन सर्वशैवानुमोदिनीम् ॥ शैवानां भोजनं त्रिविधम् । शिवपूजा-समाप्तौ बाह्यकुण्डे शिवाग्निकार्यवत् तदनन्तरं शिवाग्निकार्यान्तर मात्म-भोजनमिति भावनयैकम् । नैवेद्यसमये निवेद्यमानद्रव्याणां रूपार्पणात्मकं शिवे निवेदनस्यारम्भमात्रकृत मात्मभोजनंतु शिवाय तद्द्रव्यर्पणात्मकनिवेद-नपूरणमिति भावनया द्वितीयम् । प्रथमं निवेदनसमय एव परस्वदादिया-गीयहविरिव सूक्ष्मरूपतया नैवेद्यं रुच्यासह शिवेन उपभुक्तमेवात्मभोजनं शिवदासस्य कर्म तदुच्छिष्टस्वीकरणरूपमिति भावनया तृतीयम् । तत्राद्यं सुप्रभेदे वह्निकार्यपटलेप्रपञ्चितम्—'अग्निकार्यस्य चान्तेतु प्राणाग्नौहोममाच-रेत्। तत्पार्श्वे वह्निशालायां भोजनस्थानमुच्यते ॥ गृहेवाऽपि प्रकर्तव्यं प्राणा-ग्नियजनं परम् । तत्स्थानं गोमयालिप्तं शुद्धं कृत्वा विशेषतः ॥ पिष्टचूर्णैरलं-कृत्यसवितानं सदीपकम्। सौवर्णं राजतं ताम्रं कांस्यं वा कदळीदळम् । पात्रमेतत्तु सङ्ग्राह्यंशोधयित्वा यथार्हकम् ॥ पात्रेऽशेषाणि संयोज्य स्वात्मस्थं शिवमर्चयेत्। आत्मातु यजमानोऽसौ बुद्धिस्तत्पत्निकास्मृता ॥केशरोमाणिदर्भा स्स्युर्जिह्वाद्या यज्ञपात्रकम् । हृत्पुण्डरीकवेद्यां तमन्तस्थाग्नौ सुपूजयेत् ॥ रोमदर्भान्परिस्तीर्य प्रणवं शिवसंयुतम् । उच्चार्य परिषिच्याथ शिवेनोक्षु-क्ष्य मन्त्रवत् ॥ शिवमन्त्रं जले जप्त्वा ब्रह्माण्यंगान्यनुक्रमात् । शिवं ध्या-त्वा शिवायेति जलं पीत्वा हृदा पुनः ॥ शिवाय जुहुया दीशमन्त्राद्यै ब्रह्मपञ्चभिः । मध्यमानामिकांगुष्ठै रादायान्नं शनैश्शनैः ॥ यज्ञामृतेत्यादि-नैव जलं पीत्वा विशेषतः । पञ्चाहुतीश्च जुहुयात् प्राणमन्त्रैस्तु पञ्चभिः ॥ पात्रसंस्पर्शनं कृत्वा पश्चाद्भुञ्जीत साधकः । आचम्य च विधानेनादित्याभि-मुखसंस्थितः ॥ उदरं शिवमन्त्रेण सव्येनाभिमृशेत्ततः । दक्षिणांगुष्ठकेनां-

भः पादांगुष्ठे तु दक्षिणे ॥ स्नावयेत्तु शिवं स्मृत्वा हृन्मन्त्रं तु समुच्चरन् । चुळकोदकमेतत्स्यात् स्वात्मनः पादमूलतः ॥ प्राणाग्निहोत्रमित्येवं नित्यमेतदुदाहृतम् । अग्निकार्य मिदं प्रोक्तं शृणुत्वं कुण्डलक्षण'मिति ॥ इदं भोजनमनिवेदितान्नेनैव कर्तव्यम् । तदर्थमनिवेदितान्नसद्भावः परार्थपूजाया 'मेकभागं निवेद्यं स्या देकभागं हुतं भवेत् । एकभागं तु बल्यर्थं शेषमाचार्यभोजन'मिति आगमवचनैर्दर्शितः । आत्मार्थपूजायां 'पाकादर्धं समुद्धृत्य तस्यार्धं शंभवेऽर्पयेत् । अन्नावर्धेन जुहुयात् तद्द्विविधश्च निगद्यत'इत्यादि चुल्लीहोमप्रकरणागमवचनैर्दर्शितः । द्वितीयभोजनंतु वातुळोत्तरेदर्शितम्—'रूपं समर्प्य द्रव्यस्य रुचिमप्यर्पयेच्छिवे । उभयार्पणहीनं चेत् नैवेद्यं निष्फलं भवेत् ॥ तत्तत्प्रसादभोगान्तंनैवेद्यार्पणमुच्यते । प्रसाददानहीनं चेत् नैवेद्यमपि निष्फल'मित्यादिना । इदमारब्धासमाप्त निवेदनक्रियेणान्नेन कर्तव्यम् । नैवेद्योपचारसमये देवस्य पुरतो यन्नैवेद्यं निहितं तस्य तदानीं रूपार्पणेनारब्धा निवेदनक्रिया रुच्यर्पणपर्यन्त मनुवर्तत इति तदेवारब्धासमाप्तनिवेदनक्रियमन्नम् । तच्चं देवपित्राद्युद्देशेन दत्तमन्नं तत्समर्पणबुद्ध्येव पूजकशिवसमर्पणबुद्ध्या भुञ्जीत । तत्तृतीयं भोजनं । 'मल्लिङ्गधारिणो लोके देशिका मत्परायणाः । मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु ॥ स्वाद्यानिचादनीयानि पेयान्यन्यानि यानि च । देयानितानिवै शंभो रश्नीया दासभावतः॥ दासमार्गप्रपन्नाये शैवे पाशुपते स्थिताः । तैरेव पेयंभोज्यं चाघ्रातव्यंच मुमुक्षुभि'रिति कामिकागमादिषु प्रसिद्धमिदं भोजनं निवेदितेनैव कर्तव्यम् । देवस्य पुरतो मुमुक्षुभि नैवेद्योपचारसमये यन्निहितं तत्तदानीमेव सूक्ष्मरूपेण रुच्यासह शिवेनोपभुक्तमिति निवेदितमुच्यते । तदेव शिवोच्छिष्टं शुश्रूषार्थं ब्राह्मणदास्यं प्रपन्नश्शूद्रस्तदुच्छिष्टमिव शिवदास्यं प्रपन्नः भुञ्जीत । एवंच शिवनिर्माल्ये यानि सामान्यतो निषेधवचनानि तानि शिवदास्यभावनारहितपशुरू-

पमनुष्यमात्रविषयाणि । यानि तु दीक्षितान् शिवदास्यभावनावत ए-
वाधिकृत्य तन्निषेधवचनानि तानि निवेदितातिरिक्तपञ्चविधनिर्माल्यविष-
याणीति व्यवस्थाद्वयं प्राचीनैरेव दर्शितम् । अत्र द्वितीयव्यवस्था 'नि-
र्माल्ये षड्विधे भोज्य मेकमेव निवेदित'मित्याद्यागमप्रसिद्धा । प्रथमव्यवस्था
शिवपुराणे स्पष्टं प्रपञ्चिता । तत्रहि—'अनर्हं मम नैवेद्यं पादांबु कुसुमं
दळम् । इतीश्वरेण कथितमिति केचिन्महर्षयः ॥ वदन्ति तत्कथं
स्वामिन् यथार्थं कथयस्वमे' इति जैमिनिप्रश्ने—'देवदेवस्य वचसोविषय-
स्तत्र जैमिने । ये वीरभद्रशपिताश्शिवभक्तिपराङ्मुखाः ॥ शंभोरन्येषु दे-
वेषु ये भक्ता ये न दीक्षिताः । ये शुद्रकर्मिणश्शम्भो रन्यत्र समबुद्धयः ॥
तेषामनर्हमीशस्य तत्प्रसादचतुष्टय'मिति व्यासवचनं दृश्यते । अन्यानि
चादीक्षिताना मभक्तानां शिवनिर्माल्यमयोग्य मित्यर्थे कामिकादिप्रसिद्धानि
वचनानि प्रागुदाहृतानि । ननु शिवनिर्माल्यं सकलपातकहरं सकलव्याधि-
निवर्तक मखिलयज्ञफलप्रद मशेषतीर्थस्नानतुल्यं भुक्तिमुक्त्येकसाधनमि-
ति शिवशास्त्रज्ञैरुद्घुष्यते । भक्तिदीक्षारहितैर्नभक्ष्यं नस्प्रष्टव्य मित्यप्युच्यते ।
कथमेतदुपपद्यते । तथा सकलपापनिवर्तनशक्त्यादियुक्तं सर्वप्रायश्चित्ता-
दिवच्छिवनामकीर्तनवद्वा सर्वसाधारणीभवितुमेवाहि योग्यम् । कथं के-
षांचित् परिहरणीयं स्यात् । अतश्शिवनिर्माल्यं निकृष्टमित्येव केषांचित्
परिहरणीय मासीदिति कुतो नभवति । हरदत्ताचार्यैरपि समुक्तरीत्यो-
त्कर्षापकर्षसाधारण्येनैवोक्तम्—'उत्कर्षतः परिहरत्यपकर्षतो वा का वास-
ना भवति कस्य कृते न विद्मः । यद्दीक्षितस्य पतितस्य च तुल्यरूपं प्रत्या-
दिशन्ति मुनयः कमनीयमन्नम् ॥ चण्डाल चण्डिलचितानल शौण्डिका-
नां गोब्राह्मण ज्वलनदीक्षितयोषितां वा । स्पर्शःकथंभवति भावनया निषि-
द्धः स्पृष्टेषु वा शिवकथा विहिता विशुद्धिः ॥ वर्ज्यान्नमाहु रपि दीक्षित म-
ग्निकल्पं भोज्यान्नमेव कृतराजपरिक्रयं तम् । शङ्खास्थि पावन मपावनमस्थि

नृणामित्थं स्थिते वचनमत्र परायणं नः' इति ॥ तस्माद्विविच्येदं कथनीयमिति । किमुत्कर्षतः शिवनिर्माल्यं केषांचित्परिहरणीयं अपकर्षतोवेति । उच्यते । शिवनिर्माल्यं सकलपापहरत्वादिसर्वोत्कृष्टगुणशालीत्यत्र तावन्नविवादावकाशः । येषु पुराणागमेषु केषांचित्तन्निषेधः कृतः तेष्वेव तथाविधगुणशालीत्यपि प्रतिपादितत्वात् । श्रूयन्तेहिपुराणागमेषु वचनानि—'पादोदकं च निर्माल्यं भक्त्या धार्यं प्रयत्नतः । न तं स्पृशन्ति पापानि मनोवाक्कायजान्यपि ॥ भक्षये द्यो नरो भक्त्या पवित्रमिति शंसितः । शुद्धात्मा ब्राह्मणस्तस्य पापं क्षिप्रं विनश्यति ॥ मत्प्रसादोदकं पुष्पं सदा धार्य मिहाश्रितैः । रोगिभिश्च विशेषेण विपदिग्धैश्च यत्नतः ॥ स्वेष्टलिङ्गे च यद्दत्तश्चरुवत्तन्नसंशयः । राजसूयसहस्रस्य फलं प्राप्नोति नारद ॥ पृथूदकं महातीर्थं गङ्गा च यमुनानदी । नर्मदा सरयूर्विप्रास्तथा गोदावरीनदी ॥ सदासन्निहितास्त्वेता श्शंभोः स्नानोदके मुने । शंभोस्स्नानोदकं सेव्यं सर्वतीर्थमयं हि तत् ॥ अयुतं योगवां दद्याच्छ्रोत्रियायाहिताग्नये । मम पादजले स्नात्वा तत्फलं समवाप्नुयात्' इत्यादीनिच ॥ वैद्यशास्त्रेच— 'निर्माल्यसलिलं प्राश्य देवदेवस्य शूलिनः । क्षयकुष्ठज्वरश्वासैर्मुच्यते किल्बिषै रपि'इति ॥ रामायणेऽपि— 'तत्र देवर्षिगन्धर्वा वसुधातलवासिनः । भवांगपतितं तोयं पवित्रमिति पस्पृशु'रिति ॥ भागवतेऽपि—'किं वा शिवाख्य मशिवं नविदुस्त्वदन्ये ब्रह्मादयस्तदवकीर्यजटाःश्मशाने । तन्माल्यभस्मनृकपालवसत्पिशाचैर्ये मूर्द्धभिर्दधति तच्चरणावसृष्ट'मिति ॥ एवं परमपावनस्यापि शिवनिर्माल्यस्य स्पर्शे केषांचिन्निषेधश्शिवलिङ्गस्पर्शे निषेध इव तेषामनधिकारप्रयुक्त एव । यथाहिं पूर्वं लौकिकाशिलाविशेषरूपमपि शिवलिङ्गं प्रतिष्ठासंस्कारेण निरस्तमायाविकारभूताशुद्धरूपं चिन्मयं जातमिति तदनन्तरमदीक्षितानामस्पृश्यमासीत्, एवं निर्माल्यमपि निरीक्षणादिसंस्कारबृन्देन तथाभूतं जातं तदनन्तरं शिवेन स्वोपभोगयोग्यमित्युप-

भुक्तश्चेत्यतिविशुद्धं जात मतस्तेषामस्पृश्यमासीत् । एतदभिप्रायेणोक्तं वातुलोत्तरे—सुप्रतिष्ठितलिङ्गेषु न यथापूर्वभावना । तथा शिवप्रसादस्य पूर्वनामनसंस्मरेत्' इति ॥ एवंभूतं शिवनिर्माल्यं दीक्षया विधूतकल्मषाणां छिन्नपाशानांशिवभक्तानामेव शिवलिङ्गमिव स्पृश्यं तदाज्ञया भोज्यंच । ते हि शिवभक्ताश्शिवदीक्षया प्रतिदिवसपरिचीयमानभूतशुद्धिदंडमुण्डकलान्यासेन च शिवलिङ्गवच्छिवनिर्माल्यवच्चाप्राकृतरूपा स्संपन्नाः । 'हस्तपादादिसाधर्म्याद्रुद्रान्ममवपुर्धरान् । प्राकृता नेव मन्वानो नावजानाति बुद्धिमान्' इति वायुसंहितावचनात् । यत्तुसकलपापहरत्वादिगुणवत्वे सर्वप्रायश्चित्तत्वात्किमिति सर्वसाधारणं नजातमिति शङ्कितं तदप्येतेन निरस्तम् । अतिशुद्धशिवनिर्माल्यस्पर्श एवान्येषा मनधिकारस्योक्तत्वात् । नहि ब्रह्महत्यादिमहापातकहरमिति अघमर्षणादि वैदिकसूक्तं वेदश्रवणेऽप्यनधिकारिणामत्रैवर्णिकानां साधारणं भवति । नच तावतावैदिकसूक्तस्य कश्चिदपकर्षः । किंचोत्कर्ष एव । तदभिप्रायेणैव पुराणेष्वीश्वरवचनं 'अशुद्धात्माऽशुचिर्लोभान्मद्भुक्तं पावनं परम् । भक्षयन्नाशमाप्नोति शूद्रोह्यध्ययनादिव' इति ॥ यत्तु शिवनामवदतिविशुद्धमपि शिवनिर्माल्यं सर्वसाधारणं किमिति नजातमिति शङ्कितं तत्र ब्रूमः । अतिविशुद्धमप्राकृतमपि शिवनाम शिवाज्ञया सर्वसाधारणं जातम् । तद्घटितं वैदिकं पञ्चाक्षरं जीवरत्नमपि । तथाहि वायुसंहितायाम्—'कलौ कलुषिते काले दुर्जयेदुरतिक्रमे । अपुण्यतमसाच्छन्ने लोके धर्मपराङ्मुखे॥ क्षीणेवर्णसमाचारे संकरे समुपस्थिते । सर्वाधिकारे संदिग्धे निश्चिते वा विपर्यये ॥ गुरूपदेशे विहितेगुरुशिष्यव्यतिक्रमे । केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर' त्यंबिकायाः प्रश्ने । शिववचनम्—'आश्रित्यपरमां विद्यां हृद्यां पञ्चाक्षरीं मम । भक्त्याच भावितात्मनो मुच्यन्ते कलिजानराः ॥ मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः । दूषितानां कृतघ्नानां निर्दयानां खलात्मनाम् ॥ कि

द्धानां वक्रमनसा मपि मत्प्रवणात्मनाम् ॥ ममपञ्चाक्षरीविद्या संसारभय-तारिणी । मयैव मसकृद्देविप्रतिज्ञातं धरातले ॥ पतितोऽपि विमुच्येत मद्भ-क्तो विद्ययाऽनये'ति ॥ पुनश्च—'कर्मयोग्यो भवेन्मर्त्योऽपतितो यदि सर्व-था। कर्मायोग्येन यत्कर्म कृतंतन्नरकायहि॥ ततः कथं विमुच्येत पतितोवि-द्ययाऽनये'ति अंबिकाप्रश्ने । शिववचनम्—'सत्यमेतत् त्वया प्रोक्तं तथा ऽपि शृणु सुन्दरि । रहस्यमिति मत्वैतत् गोपितं यन्मया पुरा ॥ स्वकर्मप-तितो मर्त्यः पूजयेद्यदि मोहतः। नारकी स्यान्नसन्देहो मम पञ्चाक्षरं विने'ति॥ एवं शिवाज्ञयासर्वसाधारण्यापादनादेवेदमाज्ञासिद्धमित्यपि तत्र व्यवहृतम् । 'तदल्पाक्षर मर्थाढ्यं वेदसारं विमुक्तिदम् । आज्ञासिद्ध मसंदिग्धं वाक्य मे-तच्चिवात्मक'मिति ॥ तस्मादतर्कनीयशिवनाम्नो महिमेति तस्यपतितच-ण्डालादिसाधारण्यं युक्तमेवेत्यलं प्रपञ्चेन ॥ प्रकृतमनुसरामः ॥

यत्तु 'सदाशिवस्य निर्माल्यं मनुष्याणां नभोजन'मित्युदाहृतं, तच्च-ण्डसमार्पितसदाशिवनिर्माल्यविषयम् ॥ कामिके— 'निर्माल्यं तुसमानीय चण्डेशाय निवेदयेत् । यतो निर्मलतां याति तन्निर्माल्यं प्रकीर्तितम् ॥ च-ण्डस्याचमनं दत्वा निर्माल्यंतु विसर्जयेत् । अगाधेऽम्भसिवाऽग्नौवा गवां वा विनिवेदये'दिति चण्डसमर्पणानन्तरमेव जलादिषु प्रतिपत्तिविधानात्। तत्रैव—'चण्डभोज्यं दुराधर्षं वर्जनीयं प्रयत्नतः' इति, 'देवस्वं चण्डभोज्यं वा नान्यभोगाय कल्प्यत'इति च चण्डद्रव्यस्य सर्वाभोज्यत्वप्रतिपादनेन ता-वन्मात्रस्यैव जलादिषु प्रतिपत्त्यपेक्षत्वाच्च । नन्वेवं सति सर्वमपि शिवलिङ्ग निर्माल्य मभोज्यमेवेत्युक्तं भवति । 'लेह्यचोष्यान्नपानादि तांबूलंस्रग्विले-पनम् । निर्माल्यं निखिलं तुभ्यं प्रदत्तं तु शिवाज्ञये'ति चण्डसमर्पणमन्त्र-लिङ्गानुसारेण सर्वस्यापि शिवनिर्माल्यस्यचण्डायसमर्पणीयत्वावगमादिति केचित् । मैवम् । कामिके—'परार्थपूजायाम् ऐशान्यां पूजयेच्चण्डं गन्ध-पुष्पादिभिः क्रमात् । तस्मै समर्पयेत्सर्वं निर्माल्यं यत्प्रकल्पित'मिति सर्व-

स्य निर्माल्यस्य चण्डेशाय समर्पणीयत्वपक्षमुक्त्वा 'लिङ्गमूर्ध्निस्थमित्येके पिण्डिकास्थमथापरे। ऐशान्यांपिण्डिकास्थंवा बाह्येचण्डगृहेनये'दिति गन्धपुष्पनिर्माल्यैकदेशसमर्पणपक्षस्याप्युक्ततया तन्न्यायेननिवेदितान्नेऽप्येकदेशसमर्पणपक्षांगीकारोन्नयनात्। अन्यत्रच—'शिवोपभुक्तं स्रग्गन्धमन्नपानादिकं तथा। निवेदितमिति प्रोक्तं सर्वपापहरं परम्॥ निर्माल्ये षट् विधे भोज्यमेकमेव निवेदित'मिति चण्डद्रव्यात्पृथक्निवेदितसद्भावस्य तद्भोज्यतायाश्च साक्षादेव प्रतिपादनाच्च। आत्मार्थपूजायां तु नैतच्छङ्कावकाशः। कामिकएव शिवपूजानिरूपणानन्तरं 'अन्ते चण्डेश्वरं यजे'दित्युपक्रम्य 'बाणे लोहे चले सिद्धे नचण्डेश स्वयंभुवी'ति चण्डपूजानिषेधात्। अजितेऽप्यात्मार्थपूजायाम्—न द्वारिपूजा कर्तव्या न चण्डेशनिवेदनम्। नाममन्त्रहविस्तत्र न नित्योत्सवमेवच'इति तत्प्रतिषेधात्। यदितु प्रागुदाहृतकालोत्तरवचनानुसारेण चण्डपूजाक्रियते, तथाऽपि न दोषः। अंशुमति चण्डेशार्चनपटले— 'केवलंसहजं चैव स्वतन्त्रं च त्रिधामतम्। आत्मार्थे केवलं प्रोक्तं मण्डलेतु समर्पयेत्॥ यामाङ्गं सहजं ज्ञेयं चण्डरूपं प्रतिष्ठितम्। ग्रामाङ्गं चेत् स्वतन्त्रंस्याच्चण्डेशस्यार्चनं त्रिधे'ति चण्डेशार्चनत्रैविध्यमुपक्रम्यात्मार्थयजनान्तचण्डपूजायां— 'विलेपनं च दानं च दत्वा तन्मूलमन्त्रतः। नैवेद्यं चैवतांबूलं तन्मूलेनैव दापये'दिति पृथगेव गन्धपुष्पादिकमुक्त्वा 'केवलस्यार्चनं प्रोक्तं सहजस्यार्चनं शृणु। अन्तर्मण्डलदेशे तु मण्डलस्य च गोचरे॥ चण्डेशं स्थापयेद्विद्वान्निर्माल्येनैवचार्चये'दिति यामाङ्गचण्डेश्वरपूजायामेव निर्माल्यसमर्पणस्योक्तत्वात्। सिद्धान्तसारावळ्यामपि चण्डपूजाप्रकरणे—'नैवेद्यं तद्विधानोक्तं दत्वा तांबूलसंयुतम्॥ यामाङ्गश्चेच्छिवेनोपभुक्तं चापि निवेदये'दित्युक्तत्वाच्च। 'सदाशिवस्यनिर्माल्यं चण्डेशायसमर्पये'दिति आत्मार्थपूजागतसूक्ष्मवचनानुरोधेन चण्डेशाय निर्माल्यसमर्पणपक्षेऽपि नदोषः। परार्थपूजोक्तरीत्या त-

देकदेशसमर्पणसंभवात् । स्मृतिनिबन्धनेषुच— 'विष्वक्सेनाय दातव्यं नैवेद्यञ्च शतांशकम् । पादोदकं प्रसादं च लिङ्गे चण्डेश्वराय चे'ति निवेदितशतांशस्य चण्डांशस्यैव चण्डभागत्वप्रतिपादनाच्च । एवं 'सदाशिवस्य निर्माल्य'मिति सुप्रभेदवचनस्य कामिकवचनाद्यनुसारेण 'यत्सदाशिवनिर्माल्यं चण्डेशाय समर्पितम् तन्मनुष्याणांनभोज्य'मित्यर्थः ॥ अथवैवं तदभिप्रायः । शिवस्य निर्माल्यं शिवदास्यभावरहितानां पशुप्रायाणां केवलमनुष्याणां नभोज्यम् । अतः काम्यतया परार्थपूजाया मात्मार्थपूजायांवा समृद्धमहाहविर्निवेदने सति तावद्भोजनासमर्थानां देवालये परिचारकाणां पूजकगृहवासिना मन्येषांच शिवदीक्षावतां शिवभक्तानामलाभे तेभ्योदत्तावशिष्टं यथाकथञ्चिन्मनुष्यमात्रेन दातव्यम् । किंतु गोगजेभ्यो देयम् । अगाधेऽम्भस्यग्नौवा क्षेप्तव्यं भूमौ वाखातव्यमित्येतत्परम् । यथाऽश्वमेधादिक्रतुषुऋत्विजां हविश्शेषभक्षणसामर्थ्या भावेऋत्विग्भ्योदत्तावशिष्टंहविरनुपनीतेषु वर्णान्तरेषु नदातव्यम् । किंतूपनीतेषु ब्राह्मणादिषुदातव्यमग्नौ वाक्षेप्तव्यमित्येतत्परं 'हविश्शेषान्भक्षयितु मृत्विजश्चेन्न शक्नुयुः । विप्रेभ्यस्संप्रयच्छेयुः क्षिपेयुर्वा हुताशन'इति वचनम् । यथावा 'ब्राह्मणोच्छिष्टभोक्तृतद्दासशूद्राभावे तदुच्छिष्ट मप्सुक्षेप्तव्यं भूमौवाखातव्यमित्येतपर 'मशक्तौभूमौ निखने दप्सुवा प्रवेशये'दितिवचनम् । एतदभिप्रायेणैवोक्तं हरदत्ताचार्यैः—'यद्ब्राह्मणस्त्वमसिनाकसदां निकाये तुभ्यं निवेदितमभोज्यमिति स्मरन्ति । उच्छिष्टमीश्वर विशिष्टमपि द्विजानां भूमौ निखेय मथवाऽम्भसिमज्जनीय'मिति । अस्य श्लोकस्य उच्छिष्टभोक्तृदाससद्भावेऽपि तदुच्छिष्टं भूमौ निखेय मंभसिवा मज्जनीयमिति न तात्पर्यम् । 'उच्छिष्टमन्नं दातव्यंशीर्णानि वसनानिचे'ति दासेन प्रपन्नाय शुश्रूषुशूद्रायोच्छिष्टदान-स्मरणात् ॥ 'जीर्णान्युपानच्छत्रवासः कूर्चान्युच्छिष्टाशनं शिल्पवृत्तिश्चे'ति शुश्रूषुशूद्रधर्मस्मरणाच्च । एवमेव 'तुभ्यं निवेदितं भोज्य'मित्यत्रापि

शिवनिवेदितभोजनार्हस्य शिवदास्यं प्रपन्नस्यालाभे यस्मैकस्मैचिन्नदातव्यं किन्तु खननादिनैव तत्प्रतिपादनीयमिति तात्पर्यम् । इत्थमनेन श्लोकेनाचार्यै रुत्कर्षतएवनिर्माल्यं दासातिरिक्तैः परिहार्यं नत्वपकर्षत इति विभावित मेव । 'उत्कर्षत' इत्याद्यनन्तरश्लोकैस्तु शिवोत्कर्षनिरूपणग्रन्थे तत्प्रसादोत्कर्ष निरूपणं नोपयोगीति विभावनाय प्रौढ्यासममुक्तरीतिरवलंबिता । यानितु स्वेष्टलिङ्गसमर्पितमपि भ्रातृपुत्रभगिन्यादिभ्य एव देयमित्येवंप्रतिपादितानि तान्यग्निकार्यरूपभोजनकर्तृशिवार्चकविषयाणि । तेन तत्स्वयंभोक्तुमशक्यम् । शिवाग्निकार्यरूपस्वभोजनेनैव प्रसङ्गात् (१)आपत्तिरूप स्वकार्यस्यापि सिद्धेः । अदीक्षितेभ्यस्तु तद्दानंप्रतिषिद्धं इष्ट्यादि हविश्शेषवदुपेक्षादोषपरिहाराय न्यायतो भक्षणेनैव प्रतिपादनीयम् । दीक्षितानाञ्च तद्भोजनं महाफलप्रदम् । अतः केभ्यो देय मित्याकांक्षायां स्वगृहदीक्षावत्वेऽपि येऽग्निकार्यानधिकारिणः स्त्रीबालादयस्तेभ्योदेय मित्येवंपराणि । यत्तु कामिके— ' निर्माल्यलंघनं कृत्वा दक्षिणस्यायुतं जपेत् लङ्घनेन समस्पर्श स्समे विक्रयभक्षणे'इति लङ्घननिर्माल्यस्पर्शेऽपि दीक्षितानां प्रायश्चित्तविधानम् । यच्च— 'यन्निर्माल्येन संस्पृष्टं तद्भुजा पुरुषेण वा । पादोनं तत्र पूर्वोक्तं स्पर्शलंघनभक्षण'इति निर्माल्यतद्भक्षयितृस्पृष्टस्य स्पर्शे प्रायश्चित्तविधानं तत्सर्वत्रापि निर्माल्यपदं बहिः क्षिप्तनिर्माल्यविषयम्। तस्मिन् प्रायश्चित्तप्रकरणे देवस्वं देवताद्रव्यं 'नैवेद्यंच निवेदितम् । चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं भवे'दिति बहिः क्षिप्ते विशिष्य निर्माल्यसंज्ञाकरणात् । पिण्डिकास्थं न निर्माल्यमपिदेवेविसर्जित'मितिदेवविसर्जनानन्तरमपि बहिः क्षेपपर्यन्तस्पर्शप्रायश्चित्तपरिहाराय प्रायश्चित्तप्रकरणे ' देवस्वं देवताद्रव्य'मिति पदैर्निर्माल्यत्वाभाववर्णनाच्च । अन्यथा प्राय-

१. ' क्लृप्ति'इति कोशान्तरे ॥

श्चित्तविधानगतनिर्माल्यशब्दानां सर्वनिर्माल्यविषयत्वे तत्र बहिःक्षिप्तेति विशिष्य निर्माल्यसंज्ञाकरणस्य वैयर्थ्यप्रसङ्गात् । विसर्जनानन्तरमपि बहिःक्षेपपर्यन्तं निर्माल्यत्वाभाववर्णनस्यासामञ्जस्यप्रसङ्गाच्च । देवभूम्यादिस्पर्श तत्संस्पृष्टस्पर्शेषु दोषभावेन स्पर्शप्रायश्चित्तगतनिर्माल्यशब्दानां विशेषविषयत्वावश्यंभावाच्च । बहिः क्षिप्तश्च तदुच्यते यन्महाहविर्निवेदनादिषु भक्तपरिचारकेभ्यो दत्तावशिष्टं गोगजादिभ्यो बहिर्नीतं जलादिषु क्षिप्तं बहिर्बल्यर्थं दत्तं वा । तत्सर्वं वचनबलाद्धूपोपस्थानानन्तरं धूपव दस्पृश्य मेव । न न्वेवं तर्हि तत्र निर्माल्यभक्षणादिप्रायश्चित्तोपदेशानां बहिःक्षिप्तमात्रविषयत्वे 'देवस्व देवताद्रव्यनिवेद्यचण्डद्रव्याणां भक्षणादिषु प्रायश्चित्तविधानं नलभ्यतइति चेन्न । तत्रैव निर्माल्यभक्षणोपेक्षणदानविक्रयलंघनस्पर्शेषु, निर्माल्यतद्भक्षयितृस्पृष्टभक्षणलंघनस्पर्शेषुच प्रायश्चित्तविधानानन्तरं 'देवायतनवस्त्वन्यद्देवग्रामादिसंभवम् । व्रीह्यादियेनकेनैवोपाधिनाऽऽदायभक्षणम्॥ करोति यस्स संमूढोमलिनःस्तेनकृन्मत' इत्यादिना देवस्व देवताद्रव्यनिवेद्यचण्डद्रव्याणां भोगदानयोःपृथगेवस्तेयप्रायश्चित्तवर्णनात् । सूक्ष्मागमे— 'निर्माल्यस्य निवेद्यस्य लङ्घने दानकर्मणि । चान्द्रायणं चरेत्तत्तुगोनागानां विनिक्षिपे'दिति निर्माल्यात्पृथक् निवेद्यग्रहणादपि प्रायश्चित्तोपदेशगत- निर्माल्यशब्दानां विशिष्य निर्माल्यसंज्ञिक बहिः क्षिप्तमात्रविषयत्वं ज्ञायते। अन्यथा तेषां षड्विधनिर्माल्यपरत्वे निवेदनस्यापि तदन्तर्भूततया प्राक् निवेदनग्रहणं व्यर्थं स्यात् । यत्तु कामिक एव— 'स्नानपानीयदुग्धाद्यैर्यदि सिक्तो भवेत्तदा । स्नायात् प्रक्षाळयेत् द्वेधानाभे रूर्द्ध्वमधस्तथा ॥ चललिङ्गेऽप्ययं न्यायो विहितो यज्ञमन्दिरे' इति शिवस्याभिषेकसमये अभिषेकजल दुग्धदध्यादिकरण सेकेनाप्यूर्द्ध्वतदधोगात्र विभागेन स्नानप्रक्षाळन विधानं, तत् शिवाभिषेकजलादिबिन्दूना मर्चकं प्रति अपवित्रताभिप्रायेण न भवति । शिवाभिषेकजलादिप्राशस्त्यस्य प्राक्प्रपञ्चितत्वात् ।

किन्तु तदनन्तरमर्चकेन करिष्यमाणं शिवस्य गन्धविलेपनादिकं तन्निर्माल्यसंसिक्तगात्रेण कर्तुमयुक्तम्, गुरोरभ्यङ्गस्नपनं कृतवता तत्तैलबिन्दुसंसिक्तगात्रेण शिष्येण गुरोर्गन्धविलेपनादिकामिवेत्याभिप्रायेण । एवमन्यान्यप्येवं संभावितानि वचनानि नेतव्यानि । तदित्थमग्निकार्यबुद्ध्या भुञ्जाने निवेदितशेषं भोक्तव्यं । दास्यबुद्ध्या भुंजाने निवेदितं भोक्तव्यमिति व्यवस्था निरवद्या । तथाच वायुसंहितायामपि दर्शितम्—'ततस्स्वयञ्च भुञ्जीत शुद्धमन्नं यथासुखम् । निवेदितंवा देवेशे तच्छेषं वाऽऽत्मशुद्धये ॥ श्रद्दधानो नलोभेन न चण्डाय समर्पितम् । गन्धमाल्यादि यच्छान्यत्तत्राप्येष समो विधिः॥ नतुतत्र शिवोऽस्मीति बुद्धिं कुर्याद्विचक्षण' इति ॥ निवेदितं भुञ्जानः स्वहृत्पुण्डरीकान्तरवह्निमध्यगतशिवभावनया स्वस्य शिवाग्निकार्य रूप(१)शिवपूजाकर्तृतामभिप्रेत्य श्रीशिवोऽहमिति बुद्धिं न कुर्यात् । किन्तु शिवदास्यबुद्धिमेव कुर्यादित्यर्थः । एवं निवेदितान्नभोजनं कुर्वता प्राणाहुतयोऽपि निवेदितेनैव कर्तव्याः ' प्राणाग्निहोत्रं यः कुर्याच्छिवस्यैव प्रसादतः । अश्वमेधायुतं पुण्यं सिद्धे सिद्धे भवेन्नरः'इति शिवपुराणवचनात् ॥

## भोजन विधिः ॥

अथभोजनविधिः॥स्वाहान्तैः स्वसूत्रोक्तमन्त्रैःहुत्वातान्विसर्जयेत् । एवमग्निकार्यं निर्वर्त्यत्रौताग्निकर स्समाचान्त शिशभक्तैस्सदाचारैस्सहितो हीनजातीयानदीक्षितानेकपङ्क्तौ परिहरन् भोजनस्थानमासाद्य पीठे प्राङ्मुख उपविश्य चतुरश्रेण हस्तमानेनाचार्यपुत्रसाधकसमयिक्रमेण चतुस्त्रिद्व्येकरेखाङ्कितपरितोभस्मरेखांकितेन मण्डले नभूषितभूतले सुवर्णरजतताम्रलोहान्यतमनिर्मितं

१. शिवस्याज्ञाकर्तृतामितिपाठभेदः ॥

कांस्यनिर्मितं वा सप्तधा भस्मना शोधितमघोराभिमन्त्रितं तदभावे कदळी-फलाशपद्मचूतमधूकाद्यनिन्दितपत्रं वा पात्रं निवेश्य तत्र घृतेनोपस्तिर्य परिवेषितं द्विरभिघारितं सव्यञ्जनं शुद्धमन्नमस्त्रेण संप्रोक्ष्यत्र्यक्षरमृत्युञ्जयपूर्वकेण मृत्युञ्जयाय वौषडिति मन्त्रेण सप्तवारमभिमन्त्र्य यथावर्णं परिषेचनादिकं कृत्वाग्रासार्द्धमात्रेणान्नेन नागकूर्मकृकर देवदत्तधनंजयेभ्यः उपप्राणवायुभ्यः स्वाहेति स्वस्यदक्षिणभागे गोमयोपलिप्ते मण्डले दद्यात् । ततस्सव्य-हस्तकनिष्ठिकया स्रवणेन नागादिभ्यश्चुळकोदकं दत्वा मार्ष्मज्जनार्हं शिष्टजलममृतमन्त्रेण प्राश्य प्राणाहुतिपञ्चकं कुर्यात् । तेन प्राणापानव्यानोदानसमानानां क्रमेण तदावाहिताना मात्मभूतयोनयः पाताळतलवासिनः पितरो देवा इत्येतेषांच तृप्तिं भावयेत् । ततो यथाकिञ्चिदुच्छिष्टान्नमादाय नरकवासिभ्यःस्वाहेति भूमौ दत्वा उत्तरापोशनानन्तरं तच्छेषजलं कनिष्ठांगुळ्यानि स्राव्य हस्तोद्वर्तनादि शुद्धाचमनान्तं कर्म कृत्वा भुक्तदोषशुद्ध्यर्थं दक्षिणकरांगुष्ठजलेन दक्षिणपादांगुष्ठाग्रस्थकालाग्निरुद्रं सेचयेत् । अनिवेदितभोजिनां तु भोजने विशेषः प्रागेव सुप्रभेदोदाहरणेन दर्शितः । निवेदितभोजिनामनिवेदितभोजिनाञ्च भोजनकालादन्यत्र यदन्यदौषधतांबूलपानीयादि भोज्यं गन्धपुष्पादि भोग्यं वोपतिष्ठते, तत्सर्वं मनसावादेवाय समर्प्यैव भोक्तव्यम् । 'पत्रं पुष्पं फलं तोय मन्नपानाद्य मौषधम् । अनिवेद्यनभुञ्जीत भगवन्तं समाहित'इति कामिकवचनात् । 'उपभोगाय पुरतो वस्तु यद्यदुपस्थितम् । तत्तत्समर्प्य देवाय विदधीतात्मसात्ततः'इति वातुळवचनाच्च । यत्तु—'अन्नाद्यमौषधं तोयं पत्रं पुष्पं फलादिकम् । शिवस्य दत्वा तच्छेषं भोज्यं भुञ्जीत बुद्धिमा'नित्यौषधादे निवेदितशेषस्य भोजनविधानं, तत् कार्यार्थमनिवेदितभोजनं कुर्वतो भोजनमध्यग्राह्यौ षधादिविषयम् । अन्यत्र शिवदासानां शिवोच्छिष्टमेव ग्राह्यम् । किञ्च भक्तेन यत्किञ्चित्फलमुद्दिश्यया क्रिया लौकिकी वैदिकीवा कर्तुमिष्यते सा सर्वाऽपि

शिवाराधनरूपेति भावेन कर्तव्या । तत्तत्क्रियाजन्यसुखमपि शिवस्तद्भोक्तेति शिवे समर्प्य तद्भुक्तमेव सुखं मया भुज्यतइति भावेन भोक्तव्यम् । एवं विनैव स्वयत्नमुपनताश्शब्द स्पर्शरूपरसगन्धाख्या विषयाश्च शिवसमर्पण पूर्वकं तदुच्छिष्टबुद्ध्यैवस्वैरिन्द्रियैरनुभवितव्याः । तत्तद्विषयानुभवजन्यंसुखमपि तदुच्छिष्टबुद्ध्यैवभोक्तव्यम् । 'या या क्रिया विधातव्या प्रस्तुता जायते पुरः । तां तां कुर्यान्महादेवसमर्पितधिया सुधीः ॥ इन्द्रियादागतं किञ्चिद्यत्सुखं तच्छिवार्पितम् । कृत्वा प्रसादं भोक्तव्यं तदिन्द्रियमुखेनवे'तिवातुळश्रवणात्॥ तदर्थंच भक्तेन सदा सावधानेन भाव्यम् । संयोगेषु वियोगेषु सावधानोनिरन्तरम् । गच्छन्तिष्ठन्स्वपन्जाग्रद्भुञ्जानो मैथुनेरतः ॥ याश्शिवार्पितचेतस्कोभक्तिमांस्तु नचान्यथे'तिबृहत्कालोत्तरे श्रवणात् । एवं क्रियासमर्पणपूर्वकं क्रियां कुर्वतः विषयसमर्पणपूर्वकं विषयाननुभवत स्तत्तज्जन्यसुखसमर्पणपूर्वकं सुखं भुञ्जानस्य च सावधानस्य भक्तस्य पूर्वजन्मवासनान्ते. क्वचित् क्वचित् प्रमादान्निषिद्धक्रियां कुर्वतोऽपि निषिद्धविषयाननुभवतोऽपि निषिद्धसुखंभुञ्जानस्यापिनपापलेपोभवति। किंतुसर्वं शिवसमाराधनमितिभावयत स्सर्वमपि शिवप्रीतय एव भवति।तत्रात्मभोगार्थं नृत्तावलोकनहर्म्योपवनदीर्घिकादिक्रीडारूपां क्रियामारभमाणस्तत्तक्रियासमये संभावितानां वाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियव्यापारसाध्यानां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणरूपज्ञानेन्द्रियजन्यतत्तद्विषयसाध्यानाञ्च सुखानां समर्पणार्थंस्वकीये श्रोत्रादिज्ञानेन्द्रियपञ्चके वागादिकर्मेन्द्रियपञ्चके च क्रमेणाधिष्ठातृत्वेन सन्निहितानामीशानादीनां श्रोत्रादिवागादीनि स्वकीयश्रोत्रादिष्वैक्येनानुसंधाय तत्तादिन्द्रियव्यापारसाध्यसुखान्यैशानादि मूर्तीरधिष्ठात्रीशिवेनानुभूयमानानि विभाव्य तान्येव सुखानि शिवोच्छिष्टबुद्ध्या स्वयं भुञ्जीत। अयत्नोपनमद्विषयसुखसमर्पणं तत्तद्विषयोपभोगसमयेष्वसावधानेनकर्तुमशक्तः प्रातर्वाशिवपूजावसानेवाभविष्यदेतत्समयपर्यन्तंभावितायत्नोपनमच्छब्दरूपरस

गन्धात्मकविषयानुभवतज्जन्यसुखानिशिवायार्पयामीति युगपदेवार्पयेत् । एवं युगपद्विषयार्पणं हृदयादिषु वा हृदयादिस्थानभावितस्यसांबशिवस्य श्रोत्रादिषुवा, हृदयादिस्थानभावितस्य सदाशिवस्य क्रमादीशानादिमुखगतश्रोत्रादिषु वा स्वकीयश्रोत्राद्यैक्येन संहितेष्वीशानादीनां श्रोत्रादिषुवा कर्तव्यम् । सर्वत्रापि समर्पणे नमोन्तशिवमन्त्र एवमन्त्रः । तस्यच शिवायेदं नममेति अर्थो भावनीयः । सचार्थो मकारस्य जीववाचकस्य षष्ठ्यन्ततया लभ्यतइति सर्वमेतदतिरहस्यम् । एवं प्रतिदिनंप्रातश्शिवच्चिन्तनंशक्यस्नानविभूतिरुद्राक्षधारणसंध्योपासनपूर्वकं त्रिकालंद्विकालमेककालंवा चत्वारिंशता षोडशभिर्दशभिः पञ्चभिरुपचारै रष्टपुष्पिकामात्रेण वा शिवं पूजयन् यथावसरंशिवशास्त्राण्यधीयानश्शिवकथास्समाकर्णयन् भोजनकाले शिवाग्निकार्यबुद्ध्या शिवनिवेदितशेषं वा शिवदास्यबुद्ध्या शिवनिवेदितंवा स्वीकुर्वन् अन्यत्तांबूलपानीयगन्धपुष्पादिभोग्यजातं शिवसमर्पितं जानन् च्चिकीर्षितं कर्मजातं तत्फलरूपाणां सुखानां शिवोपभोग्यत्वं विभाव्य शिवाराधनबुद्ध्या कुर्वाणः स्वयत्नमनपेक्ष्य उपनतानपि विषयान् तत्तद्विषयोपस्थितिसमयेषु युगपद्वा शिवार्पितान्विदधानः सर्वाण्यपि सुखानि शिवोच्छिष्टबुद्ध्यैवानुभवन् बहिर्लौकिककार्यविचारकालेप्यनन्तशिवनामानुसन्धानेन सफलयन्नन्तरध्वनि गमागमाभ्यां विहरन्तीं निरतिशयप्रकाशासमृतरूपिणी मानन्दलेखामपि समयेष्वाकलयन् पञ्चाक्षरपरदेवता मशेषोपनिषदन्विष्यमाणचरणांबुज मखिलदेवतासार्वभौम मपारकरुणांबुधि माश्रितरक्षाधुरन्धर मंबिकयासह निजहृदयजलरुहकुहरे विहरमाणमानन्दसन्दोहमूर्तिं परमशिवमनवरतमन्तर्दृशावलोकयन् इष्टबन्धुभिस्सह सुखमासीत ॥

वेल्लद्धीशच्चिनत्रोम्मतिभोरुदारे
चित्ते च धामनि चिरादभिवर्धमानाम् ।

अर्चाविधां पशुपते रमराभिनन्द्या
मित्थं समाचकलमीश्वरशासनेन ॥

सद्राजयोगनिजचंचुरनाहताज्ञा-
शक्त्यादिसारसमुदञ्चितदिव्यतेजाः ।
आवाहनक्रमकलानिपुणोऽतिधीरः
श्रीबोम्मभूपतिलकश्शिवपूजकस्स्यात् ॥

करोतु ज्वरकण्ठेशस्स्वकीयार्चनचन्द्रिकाम् ।
आकल्पस्थायिनी मेनां बुस्थले चन्द्रिकामिव ॥

हरिः ओम् ॥

शुभमस्तु । गुरुभ्यो नमः ॥

भजामि ज्वरकण्ठेशमृत्युञ्जयपदांबुजम् ।
यदाश्रितो नख्याजा द्राति जैवातृकस्सदा ॥

शिवार्चनाचन्द्रिका समाप्ता ॥



